


# लघुसिद्धान्तकौमुदी

वरदराजकृता

अवधदेशीय लक्ष्मणपुरमध्ये श्रीयुत मुन्शी नवलकिशोर दिद्यारसिकानुमत्या बारहबङ्कीप्रदेशीय बहिरालय जानपदीय धनावली निवासि श्री पण्डित महेशदत्त सुकुलेनातीव परिश्रमतस्संशोधिता



शहर लखनऊ हज़रतगञ्ज उक्त महाशय मुद्रालये मुद्रिता ॥

सम्वत् १९३६ विक्रमीय

जनवरी सन् १८८० ई०

# विज्ञप्ति

इस महीने अर्थात् जनवरी सन् १८८० ई० पर्य्यन्त जो पुस्तकें बेचने के लिये तैय्यार हैं वह इस सूची पत्र में लिखी हैं और उन का मोल भी बहुत किफ़ायत से घटा कर नियत हुआ है परन्तु व्यापारियों के लिये और भी सस्ती होंगी जिन को व्योपार की इच्छा हो वह छापेखाने के मुहतमिम अथवा मालिक के नाम खत भेज कर क़ीमत का निर्णय करलें॥

| नाम किताब | नाम किताब | नाम किताब |
|---|---|---|
| व्याकरण और ज्योतिष | अमरविनोद | गङ्गा लहरी |
| सिद्धान्त चन्द्रिका | जगद्विनोद | भगवद्गीता |
| लघुकौमुदी | औषधिसङ्ग्रह कल्पवल्ली | भगवती गीता |
| मुहूर्त्त चिन्तामणि सारिणी | निघण्टु भाषा | श्रीमद्भागवत सटीक |
| शीघ्रबोध | वैद्यदर्पण | तथा दशम स्कन्ध |
| पराशरी सटीक | रामविनोद | हनुमान बाहुक |
| मुहूर्त्त गणपति | कोष और इतिहास॥ | सुखसागर |
| सङ्ग्रह शिरोमणि | शिवसिंह सरोज | ब्रह्मसार |
| जातक चन्द्रिका | सामुद्रिक | परमार्त्थ सार |
| लघुजातक भाषाटी०स० | गणित कामधेनु | प्रेमसागर |
| भाषा जातकालङ्कार | कमीशन बड़ोदा | सूरसागर |
| संस्कृत जातकालङ्कार | शब्दार्त्थ कोष | रागप्रकाश |
| जातकाभरण | अमरकोष प्रथम काण्ड | भक्तमाल |
| मुहूर्त्त दीपक | अमर कोष तीनों काण्ड | अवधयात्रा |
| होरा मकरन्द | भाषा टीका सहित | कथा गङ्गाजी |
| मुहूर्त्त चिन्तामणि | अनेकार्त्थ कोष | रामायण टैप की |
| मुहूर्त्त मार्त्तण्ड | ब्रजविलास | रामायण जिल्द बन्धी |
| वैद्यक | दुर्गापाठ सटीक | रामायण तुलसी कृत पञ्चा |
| शार्ङ्गधर सटीक | दुर्गापाठ मूल | रामायण तुलसी कृत स० |
| वैद्यजीवन | अपराध भञ्जन स्तोत्र | सतसई रामायण |
| वैद्य मनोत्सव | महिम्न स्तोत्र | कवितावली रामायण |
| अमृत सागर | श्रीगोपाल सहस्रनाम | गीतावली रामायण |
| अमृत सागर बड़ी | शिवार्च्चन | रामायण दोहावली |



# लघुसिद्धान्तकौमुदी

॥ श्रीगणेशाय नमः ॥ नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्। पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

अइउण्। ऋऌक्। एओङ्। ऐऔच्। हयवरट्। लण्। ञमङणनम्। झभञ्। घढधष्। जबगडदश्। खफछठथचटतव्। कपय्। शषसर्। हल्। इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि। एषामन्त्या इतः। हकारादिष्वकार उच्चारणार्थः। लण्मध्ये त्वित्संज्ञकः॥

### हलन्त्यम् ।१।३।३।

उपदेशेऽन्त्यं हलित् स्यात्। उपदेश आद्योच्चारणम्। सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र॥

### अदर्शनं लोपः ।१।१।६०।

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्॥

### तस्य लोपः ।१।३।९।

तस्येतो लोपः स्यात्। णादयोऽणाद्यर्थाः॥

### आदिरन्त्येन सहेता ।१।१।७१।

अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात्। यथाऽणिति अ इ उ वर्णानां संज्ञा। एवमच् हल् अलित्यादयः॥

ऊ कालोऽज्झ्रस्वदीर्घप्लुतः १।२।२७।

उश्च ऊश्च ऊ३श्च वः। वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्व दीर्घ प्लुत सञ्ज्ञस्स्यात्। स प्रत्येक मुदात्तादि भेदेन त्रिधा।

उच्चैरुदात्तः १।२।२९।

नीचैरनुदात्तः १।२।३०

समाहारस्स्वरितः। १।२।३१।

स नवविधोऽपि प्रत्येक मनुनासिकाननुनासिकत्वाभ्यां द्विधा

मुखनासिकावचनोऽनुनासिकः। १।१।८।

मुखसहित नासिकयोच्चार्य्यमाणो वर्णोऽनुनासिक सञ्ज्ञस्स्यात्। तदित्थम्। अ इ उ ऋ एषां वर्णानां प्रत्येक मष्टादश भेदाः। लृवर्णस्य द्वादश। तस्य दीर्घाभावात्। एचामपि द्वादश तेषां ह्रस्वाभावात्॥

तुल्यास्य प्रयत्नं सवर्णम्। १।१।९।।

ताल्वादि स्थान माभ्यन्तर प्रयत्नश्चेतद् द्वयं यस्य येन तुल्यन्तन्मिथस्सवर्ण सञ्ज्ञं स्यात्। ऋ लृ वर्णयोर्मिथस्सावर्ण्यं वाच्यम्। अकुहविसर्जनीयानां कण्ठः। इचुयशानान्तालु। ऋटुरषाणाम्मूर्द्धा। लृतुलसानान्दन्ताः। उपूपध्मानीयानामोष्ठौ। ञमङणनानां नासिका च। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकाऽनुस्वारस्य। यत्नो द्विधा आभ्यन्तरो बाह्यश्च। आद्यः पञ्चधा। स्पृष्टेषत्स्पृष्टेष-द्विवृत विवृत संवृत भेदात्। तत्र स्पृष्टम्प्रयत्नं स्पर्शानाम्। ईषत्स्पृष्ट मन्तस्स्थानाम्। ईषद्विवृत मूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। प्रक्रियादशा

यान्तु विवृतभेद। बाह्यस्त्वेकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति। खयो विवारा श्वासा अघोषाश्च। हशः संवारा नादा घोषाश्च। वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः। वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः। कादयो मावसानाः स्पर्शाः। यणोऽन्तःस्थाः। शल ऊष्माणः। अचः स्वराः। ×कः ख इति कखाभ्यां प्रागर्द्धविसर्गसदृशो जिह्वामूलीयः। ×पः फ इति पफाभ्यां प्रागर्द्धविसर्गसदृश उपध्मानीयः। अं अः इत्यचः परावनुस्वारविसर्गौ॥

अणुदित्सवर्णस्य चाप्रत्ययः।१।१।६९।

अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात्। अत्रैवाण् परेण णकारेण। कु चु टु तु पु एते उदितः। तदेवम् इत्यष्टादशानां संज्ञा। तथेकारोकारौ। ऋकारस्त्रिंशतः। एवं लृकारोऽपि। एचो द्वादशानाम्। अनुनासिकाननुनासिकभेदेन यवला द्विधा। तेनाऽनुनासिकाननुनासिकास्ते द्वयोर्द्वयोः संज्ञा॥

परः सन्निकर्षः संहिता।१।४।१०९।

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्॥

हलोऽनन्तराः संयोगः।१।१।७।

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः॥

सुप्तिङन्तं पदम्।१।४।१४

सुबन्तं तिङन्तं च पदसंज्ञं स्यात्॥

॥ इति संज्ञाप्रकरणम्॥

॥ अच्सन्धिः॥

इकोयणचि।६।१।७७।

इकस्स्थाने यणस्स्यादचि संहितायां विषये। सुधी उपास्य इति स्थिते।

तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य। १।१।६६।

सप्तमीनिर्द्देशेन विधीयमानङ्कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्व्वस्य बोध्यम्॥

स्थानेऽन्तरतमः। १।१।५०

प्रसङ्गे सति सदृशतम आदेशः स्यात्। सुध्य् उपास्य इति जाते।

अनचि च। ८।४।४७।

अचः परस्य यरो द्वे वा स्तो न त्वचि॥

झलां जश् झशि। ८।४।५३।

स्पष्टम्। इति धकारस्य दकारः॥

संयोगान्तस्य लोपः। ८।२।२३।

संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्॥

अलोऽन्त्यस्य। १।१।५२।

षष्ठीनिर्द्दिष्टोऽन्त्यस्यादेशः स्यात्। इति प्राप्ते। यणः प्रतिषेधो वाच्यः॥ सुद्ध्युपास्यः। मद्ध्वरिः। धात्त्रंशः। लाकृतिः।

एचोऽयवायावः। ६।१।७८।

एचः क्रमादय् अव् आय् आव् एते स्युरचि।

यथासङ्ख्यमनुदेशस्समानाम्। १।३।१०।

समसम्बन्धी विधिर्य्यथासङ्ख्यं स्यात्। हरये। विष्णवे। नायकः। पावकः॥ गोपयसोर्य्यत्

वान्तो यि प्रत्यये। ६।१।७९॥

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः। गव्यम्। नाव्यम्। अध्वपरिमाणे च। गव्यूतिः॥

अदेङ्गुणः ।१।१।२।

अत् एङ् च गुणसञ्ज्ञः स्यात् ॥

तपरस्तत्कालस्य १।१।७०

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणसमकालस्यैव सञ्ज्ञा स्यात् ॥

आद्गुणः ।६।१।८७।

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥

उपदेशेऽजनुनासिक इत् ।१।३।२।

उपदेशेऽनुनासिकोऽजित्सञ्ज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः सञ्ज्ञा ॥

उरण् रपरः ।१।१।५१।

ऋ इति त्रिंशतः सञ्ज्ञेत्युक्तम् तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥

लोपः शाकल्यस्य ८।३।१९

अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे ॥

पूर्वत्रासिद्धम् ।८।२।१।

सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर एह । हरयेह । विष्ण इह । विष्णविह ।

वृद्धिरादैच् ।१।१।१।

आदैच्च वृद्धिसञ्ज्ञः स्यात्

वृद्धिरेचि ।६।१।८८।

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

एत्येधत्यूठ्सु ६।१।८९।

अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति। उपैधते। प्रष्ठौहः॥ एजाद्योः किम्। उपेतः। मा भवान् प्रेदिधत्। अक्षादूहिन्यामुपसंख्यानम्। अक्षौहिणी-सेना। प्रादूहोढोढ्येषैष्येषु। प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। ऋते च तृतीयासमासे। सुखेन ऋतः। सुखार्तः। तृतीयेति किम्। परमर्तः। प्रवत्सतरकम्बलवसनार्णदशानामृणे॥ प्रार्णम्। वत्सतरार्णम्। इत्यादि।

उपसर्गाः क्रियायोगे।१।४।५९।

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप। एते प्रादयः॥

भूवादयो धातवः १।३।१

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः॥

उपसर्गादृति धातौ ६।१।९१।

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्। प्रार्च्छति॥

एङि पररूपम्।६।१।९४।

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात्। प्रेजते। उपोषति॥

अचोऽन्त्यादि टि।१।१।६४।

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्। शकन्ध्वादिषु पररूपं वाच्यम्। तच्च टेः। शकन्धुः। कर्कन्धुः। मनीषा। लाङ्गलीषा। आकृतिगणोऽयम्। मार्त्तण्डः॥

ओमाङोश्च।६।१।९५।

ओमि आङि च आत्परं रूपमेकादेशः स्यात्। शिवायोन्नमः। शिवेहि।

अकः सवर्णे दीर्घः ६।१।१०१।

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात्। दैत्यारिः। श्रीशः। विष्णूदयः। होतृकारः॥

एङः पदान्तादति। ६।१।१०९।

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव॥

सर्वत्र विभाषा गोः ६।१।१२२।

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः। गो अग्रम्। गोऽग्रम्। एङन्तस्य किम्। चित्रग्वग्रम्। पदान्ते किम्। गोः॥

अनेकाल्शित्सर्वस्य १।१।५५।

इति प्राप्ते।

ङिच्च। १।१।५३।

ङिदनेकालप्यन्त्यस्यैव स्यात्॥

अवङ् स्फोटायनस्य ६।१।१२३

पदान्ते एङन्तस्य गोरवङ् वाचि। गवाग्रम्। गोऽग्रम्। पदान्ते किम्। गवि॥

इन्द्रे च। ६।१।१२४।

गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥

दूराद्धूते च ८।२।८४।

दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा॥

प्लुतप्रगृह्या अचि नित्यम्। ६।१।१२५।

एतेऽचि प्रकृत्या स्युः। आगच्छ कृष्ण३ अत्र गौश्चरति॥

ईदूदेद्द्विवचनं प्रगृह्यम्। १।१।११।

ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ॥

अदसो मात् ।१।१।१२।

अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र ॥

चादयोऽसत्त्वे ।१।४।५७।

अद्रव्यार्थाश्चादयो निपातास्स्युः

प्रादयः ।१।४।५८

एतेऽपि तथा ॥

निपात एकाजनाङ् ।१।१।१४

एकोऽज् निपात आङ्वर्ज्यः प्रगृह्यः । इ इन्द्रः । उ उमेशः । वाक्यस्मरणयोरङित् । आ एवन्नु मन्यसे । आ एवङ्किल तत् । अन्यत्र ङित् । ईषदुष्णम् । ओष्णम् ॥

ओत् ।१।१।१५

ओदन्तो निपातः प्रगृह्यः । अहो ईशाः ॥

सम्बुद्धौ शाकल्यस्येतावनार्षे ।१।१।१६

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति ॥

मय उञो वो वा ।८।३।३३।

मयः परस्य उञो वो वा अचि । किम्वुक्तम् । किमु उक्तम् ॥

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।६।१।२७

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र । चक्र्यत्र । पदान्तादिति किम् ।

अचो रहाभ्यान्द्वे ८।४।४६

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः ॥

गौर्यौ । न समासे । वाप्यश्वः

ऋत्यकः ।६।१।१२८।

ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्मर्षिः । ब्रह्मऋषिः पदान्ताः किम् । आर्च्छत् ॥

॥ इति स्वरसन्धिः ॥

॥ अथ हल्सन्धिः ॥

स्तोः श्चुना श्चुः ८।४।४०।

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥

शात् ८।४।४४ ।

शात्परस्य तोर्न श्चुः विश्नः । प्रश्नः

ष्टुना ष्टुः ।८।४।४१।

स्तोः ष्टुना योगे ष्टुः । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥

न पदान्ताट्टोरनाम् ८।४।४२

पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः किम् । सर्पिष्टमम् । अनाम्नवतिनगरीणामिति वाच्यम् । षण्णाम् । षण्णवतिः । षण्णगर्यः ॥

तोः षि ।८।४।४३।

न ष्टुत्वम् । सन्षष्ठः ।

झलां जशोऽन्ते ८।२।३९

पदान्ते झलां जशः स्युः । वागीशः ।

यरोऽनुनासिकेऽनुनासिको वा ८।४।४५।

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः । प्रत्यये भाषायां नित्यम् । तन्मात्रम् ।

चिन्मयम् ।

तोर्लि । ८।४।६० ।

परसवर्णः । तल्लयः । विद्वाँल्लिखति । नस्यानुनासिको लः ॥

उदः स्थास्तम्भोः पूर्वस्य ८।४।६१

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥

तस्मादित्युत्तरस्य १।१।६७ ।

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयम् ॥

आदेः परस्य । १।१।५४ ।

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥

झरो झरि सवर्णे । ८।४।६५

हलः परस्य झरो वा लोपः सवर्णे झरि ॥

खरि च । ८।४।५५ ।

खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥

झयो होऽन्यतरस्याम् ८।४।६२

झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः । वाग्हरिः ॥

शश्छोऽटि । ८।४।६३

झयः परस्य शस्य छो वाऽटि । तद् शिव इत्यत्र दस्य चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः । तच्शिवः ॥ छत्वममीति वाच्यम् । तच्छ्लोकेन ॥

मोऽनुस्वारः । ८।३।२३ ।

मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ।

नश्चापदान्तस्य झलि ८।३।२४ ।

नस्य मस्य च। पदान्तस्य झल्यनुस्वारः। यशांसि। आक्रंस्यते

अनुस्वारस्य ययि परसवर्णः ८।४।५८।

स्पष्टम्।

वा पदान्तस्य ८।४।५९

त्वङ्करोषि। त्वं करोषि।

मो राजि समः क्वौ। ८।३।२५।

क्विबन्ते राजतौ परे समो मस्य म एव स्यात्॥ सम्राट्॥

हे मपरे वा। ८।३।२६।

मपरे हकारे परे मस्य मो वा। किम् ह्मलयति। किं ह्मलयति।

यवलपरे यवला वा। किंय् ह्यः। कियँ ह्यः। किव्ँ ह्वलयति। किवँ ह्व-लयति। किल्ँ ह्लादयति। किलँ ह्लादयति।

नपरे नः। ८।३।२७।

न परे हकारे मस्य नो वा। किन् ह्नुते। किं ह्नुते।

ङ्णोः कुक्टुक् शरि। ८।३।२८

वा स्तः। प्राङ्क्षष्ठः। प्राङ् षष्ठः। सुगण्ट्षष्ठः। सुगण् षष्ठः॥

डः सि धुट्। ८।३।२९।

डात् परस्य सस्य धुड्वा॥

आद्यन्तौ टकितौ १।१।४६।

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः। षट्त्सन्तः। षट् सन्तः

नश्च। ८।३।३०।

नान्तात्परस्य सस्य धुड्वा। सन्त्सः। सन्सः।

शि तुक्। ८।३।३१।

पदान्तस्य नस्य शे परे तुग्वा। सञ्छम्भुः। सञ्च्शम्भुः। सञ्छ्शम्भुः। सञ्शम्भुः॥

ङमो ह्रस्वादचि ङमुण्नित्यम्। ८।३।३२

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः॥

समः सुटि ८।३।५।

समो रुः सुटि।

अत्रानुनासिकः पूर्वस्य तु वा ८।३।२।

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा॥

अनुनासिकात्परोऽनुस्वारः ८।३।४।

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः॥

खरवसानयोर्विसर्जनीयः ८।३।१५।

खरि अवसाने च पदान्तस्य रस्य विसर्गः। सम्पुङ्कानां सो वक्तव्यः। सँस्कर्त्ता संस्कर्त्ता॥

पुमः खय्यम्परे ८।३।६।

अम्परे खयि पुमो रुः। पुँस्कोकिलः। पुंस्कोकिलः॥

नश्छव्यप्रशान् ८।३।७

अम्परे छवि नान्तस्य पदस्य रुः॥

विसर्जनीयस्य सः ८।३।३४।

खरि। चक्रिँस्त्रायस्व। चक्रिंस्त्रायस्व। अप्रशान् किम्। प्रशान् तनोति। पदान्तस्येति किम्। हन्ति॥

नॄन्पे ८।३।१०।

नॄनित्यस्य रुर्वा पे॥

कुप्वोः ≍क≍पौ च ८।३।३७।

कवर्गे पवर्गे च विसर्गस्य ≍क≍पौ स्तः। चाद्विसर्गः। नॄँ≍पाहि। नॄँः पाहि। नॄं≍पाहि। नॄंः पाहि। नॄन्पाहि॥

तस्य परमाम्रेडितम् ८।१।२॥

द्विरुक्तस्य परमाम्रेडितं स्यात्॥

कानाम्रेडिते। ८।३।१२।

कान्नकारस्य रुः स्यादाम्रेडिते। कांस्कान्। कांस्कान्॥

छे च। ६।१।७३।

ह्रस्वस्य छे तुक्। शिवच्छाया॥

पदान्ताद्वा। ६।१।७६।

दीर्घात्पदान्ताच्छे तुग्वा। लक्ष्मीच्छाया॥

इति हल्सन्धिः॥

अथ विसर्गसन्धिः॥

विसर्जनीयस्य सः। ८।३।३४।

खरि। विष्णुस्त्राता॥

वा शरि। ८।३।३६।

शरि विसर्गस्य विसर्गो वा। हरिः शेते। हरिश्शेते॥

ससजुषो रुः। ८।२।६६।

पदान्तस्य सस्य सजुषश्च रुः स्यात्॥

अतो रोरप्लुतादप्लुते। ६।१।११३।

अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। शिवोऽर्च्यः॥

हशि च। ६।१।११४॥

तथा। शिवो वन्द्यः।

भोभगोअघोअपूर्वस्य योऽशि। ८।३।१७।

एतत्पूर्वस्य रोर्यादेशोऽशि। देवा इह। देवायिह। भोस्। भगोस्। अघोस्। इति सान्ता निपाताः। तेषां रोर्यत्वे कृते॥

हलि सर्वेषाम्। ८।३।२२।

भो भगो अघो अपूर्वस्य यस्य लोपः स्याद्धलि। भो देवाः। भगो नमस्ते। अघो याहि॥

रोऽसुपि। ८।२।६९।

अह्नो रेफादेशो न तु सुपि। अहरहः। अहर्गणः॥

रो रि। ८।३।१४।

रेफस्य रेफे परे लोपः॥

ढ्रलोपे पूर्वस्य दीर्घोऽणः। ६।३।१११।

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः। पुना रमते। हरी रम्यः। शम्भू राजते। अणः किम्। तृढः। वृढः। मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते॥

विप्रतिषेधे परं कार्य्यम्। १।४।२।

तुल्यबलविरोधे परं कार्य्यं स्यात्। इति लोपे प्राप्ते पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव। मनोरथः।

एतत्तदोः सुलोपोऽकोरनञ्समासे हलि। ६।१।१३२।

अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम्। एषको रुद्रः। अनञ्समासे किम्। असशिवः। हलि किम्। एषोऽत्र।

सोऽचि लोपे चेत्पादपूरणम्। ६।१।१३४।

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत। सेमामविड्ढि प्रभृतिम्। सैष दाशरथी रामः॥

इति विसर्गसन्धिः॥

## अथाजन्तपुल्लिङ्गाः॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १।२।४५।

धातुं प्रत्ययं प्रत्ययान्तं च वर्ज्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसञ्ज्ञं स्यात्॥

कृत्तद्धितसमासाश्च। १।२।४६।

कृत्तद्धितान्तौ समासश्च तथा स्युः।

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्। ४।१।२॥

सु औ जस् इति प्रथमा। अम् औट् शस् इति द्वितीया। टाभ्याम्भिस् इति तृतीया। ङे भ्याम्भ्यस् इति चतुर्थी। ङसि भ्याम्भ्यस् इति पञ्चमी। ङस् ओस् आम् इति षष्ठी। ङि ओस् सुप् इति सप्तमी॥

ङ्याप्प्रातिपदिकात्। ४।१।१।

प्रत्ययः। ३।१।१।

परश्च। ३।१।२।

इत्यधिकृत्य। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्यया स्युः॥

सुपः। १।४।१०३।

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसञ्ज्ञानि स्युः॥

द्व्येकयोर्द्विवचनैकवचने। १।४।२२।

द्वित्वैकत्वयोरेते स्तः॥

बहुषु बहुवचनम्। १।४।२१।

बहुत्वविवक्षायां बहुवचनं स्यात्॥

विरामोऽवसानम्। १।४।११०।

वर्णानामभावोऽवसानसञ्ज्ञः स्यात्। रुत्वविसर्गौ। रामः।

सरूपाणामेकशेष एकविभक्तौ। १।२।६४।

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते।

प्रथमयोः पूर्वसवर्णः। ६।१।१०२।

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते॥

नादिचि।६।१।१०४।

आदिचि न पूर्व्व सवर्ण दीर्घः। वृक्षिरेचि। रामौ॥

वहुषु वहु वचनम्।१।४।२१।

चुटू।१।३।७।

प्रत्ययाद्यौ चुटू इतौ स्तः॥

विभक्तिश्च।१।४।१०४।

सुप्तिङौ विभक्ति सञ्ज्ञौ स्तः॥

न विभक्तौ तुस्माः।१।३।४

विभक्तिस्था स्तवर्गसमा नेतः। इति सस्य नेत्वम्। रामाः॥

एकवचनं संबुद्धिः।२।३।४९।

सम्बोधने प्रथमाया एकवचनं संबुद्धि सञ्ज्ञं स्यात्॥

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।१।४।१३।

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन्नङ्गं स्यात्॥

एङ्ह्रस्वात् सम्बुद्धेः।६।१।६९।

एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते। सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः।

अमि पूर्व्वः।६।१।१०७

अकोऽम्यचि पूर्वरूपमेकादेशः। रामम्। रामौ।

लशक्वतद्धिते।१।३।८।

तद्धितवर्ज्जे प्रत्ययाद्या लशकवर्गा इतस्स्युः

तस्माच्छसो नः पुंसि।६।१।१०३।

पूर्व्वसवर्णदीर्घात्परो यश्शसस्सस्य नस्स्यात्पुंसि॥ स्त्त

अट्कुप्वाङ्नुम्व्यवायेऽपि।८।४।२।

अट् कवर्गः। पवर्गः। आङ् नुम् एतैर्व्यस्तैर्व्यवाये सम्भवति

लि नैकस्य च धने ऽपि रषाभ्याम्परस्य नस्य णास्यात्समान पदे । इति णत्वे ॥

पदान्तस्य । ८।४। ३७।

नस्य णोन । रामान् ।

टाङसिङसामिनात्स्याः । ७।१।१२।

अदन्ताट्टादीनामिनादयः । णत्वम् । रामेण ॥

सुपिच ७।३।१०२।

यञादौ सुपि अतो ऽङ्गस्य दीर्घः । रामाभ्याम् ॥

अतोभिस ऐस । ७।१।९।

अनेकाल् शित्सर्व्वस्य । रामैः ॥

ङेर्य्यः ।७।१।१३।

अतो ऽङ्गात्परस्य ङेर्य्यादेशः ।

स्थानिवदादेशोनल्विधौ १।१।५६।

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपिचेति दीर्घः । रामाय । रामाभ्याम् ।

बहुवचने झल्येत् । ७।३।१०३।

झलादौ बहुवचने सुप्यतो ऽङ्गस्यैकारः । रामेभ्यः । सुपिकिम् पचध्वम् ॥

वावसाने । ८।४।५६।

अवसाने झलां चरो वा । रामात् । रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥

ओसिच । ७।३।१०४।

अतो ऽङ्गस्यैकारः । रामयोः ॥

ह्रस्वनद्यापोनुट् । ७।१।५४॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामोनुडागमः ॥

नामि ।६।४।३।

अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामयोः । एत्वे कृते ।

आदेशप्रत्यययोः ८।३।५९।

इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य च सस्य मूर्द्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः रामेषु । एवं कृष्णादयोऽप्यदन्ताः

सर्वादीनि सर्वनामानि १।१।२७

सर्व, विश्व, उभ, उभय, डतर, डतम, अन्य, अन्यतर, इतर, त्वत्, त्व, नेम, सम, सिम । पूर्व पर अवर दक्षिण उत्तर अपर अधराणि व्यवस्थायामसंज्ञायाम् । स्वम् अज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥

जसः शी ७।१।१७।

अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः सर्वे ।

सर्वनाम्नः स्मै ७।१।१४।

अतः सर्वनाम्नो ङेः स्मै सर्वस्मै ॥

ङसिङ्योः स्मात्स्मिनौ ७।१।१५।

अतः सर्वनाम्नः ङसिङ्योरेतौ स्तः । सर्वस्मात् ॥

आमि सर्वनाम्नः सुट् ७।१।५२।

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वे षत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । उभशब्दो द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ । तस्येह पाठोऽकजर्थः । डतर डतमौ प्रत्ययौ । प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः । नेम इत्यर्द्धे । समः

सर्व्वपर्य्यायस्तुल्यपर्य्यायस्तु न समानामिति ज्ञापकात् ॥

पूर्व्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसञ्ज्ञायाम् १।१।३४।

एतेषां व्यवस्थायामसञ्ज्ञायां सर्व्वनामसञ्ज्ञा गणसूत्रात्सर्व्वत्र या प्राप्ता सा जसि वा। पूर्व्वे। पूर्व्वाः। असञ्ज्ञायां किम्। उत्तराः कुरवः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्। दक्षिणा गाथकाः कुशला इत्यर्थः॥

स्वमज्ञातिधनाख्यायाम् १।१।३५।

ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता सञ्ज्ञा जसि वा। स्वे स्वाः। आत्मीया आत्मान इति वा। ज्ञातिधनवाचिनस्तु स्वाः ज्ञातयोऽर्था वा॥

अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६।

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता सञ्ज्ञा जसि वा। अन्तरे। अन्तरा वा। गृहा बाह्या इत्यर्थः। अन्तरे। अन्तरा वा शाटकाः परिधानीया इत्यर्थः॥

पूर्व्वादिभ्यो नवभ्यो वा ७।१।१६।

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्व्वस्मात्। पूर्व्वात्। पूर्व्वस्मिन्। पूर्व्वे। एवम्परादीनाम्। शेषं सर्व्ववत्॥

प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च १।१।३३।

एते जसि उक्तसञ्ज्ञा वा स्युः। प्रथमे। प्रथमाः। तयः प्रत्ययः। द्वितये। द्वितयाः। शेषं रामवत्। नेमे। नेमाः। शेषं सर्व्ववत्॥ तीयस्य ङित्सु वा। द्वितीयस्मै। द्वितीयायेत्यादि। एवन्तृतीयः। निर्ज्जरः॥

जराया जरसन्यतरस्याम् ७।२।१०१।

अजादौ विभक्तौ। पदाङ्गाधिकारे तस्य तदन्तस्य च। निर्द्दिश्य

नान्त्यादेशा भवन्ति। एकदेशविकृतमनन्यवदिति जर शब्दस्य जरस्। निर्जरसौ। निर्जरसः इत्यादि पक्षे हलादौ च रामवत्। विश्वपाः॥

दीर्घाज्जसि च। ६।१।१०५।

विश्वपौ। विश्वपाः। हे विश्वपाः। विश्वपाम्। विश्वपौ॥

सुडनपुंसकस्य। १।१।४३।

स्वादिपञ्चवचनानि सर्वनामस्थानसञ्ज्ञानि स्युरक्लीबस्य।

स्वादिष्वसर्वनामस्थाने। १।४।१७।

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात्।

यचि भम्। १।४।१८।

यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसञ्ज्ञं स्यात्॥

आकडारादेका सञ्ज्ञा। १।४।१।

इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव सञ्ज्ञा ज्ञेया। या पराऽनवकाशा च॥

आतो धातोः। ६।४।१४०।

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः। अलोऽन्त्यस्य। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। धातोः किम्। हाहान्। हरिः। हरी।

जसि च। ७।३।१०९।

ह्रस्वान्तस्याङ्गस्य गुणः। हरयः॥

ह्रस्वस्य गुणः। ७।३।१०८।

सम्बुद्धौ। हे हरे। हरिम्। हरी। हरीन्।

शेषो घ्यसखि। १।४।७।

शेष इति स्पष्टार्थम्। ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिस-

न्त्वम् ॥

आङो नाऽस्त्रियाम् ।७।३।१२०।

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासञ्ज्ञा । हरिणा हरिभ्याम् । हरिभिः ॥

घेर्ङिति ।७।३।१११।

घिसञ्ज्ञस्य ङिति सुपि गुणः । हरये ॥

ङसिङसोश्च ।६।१।११०।

एङो ङसिङसोरति पूर्व्वरूपमेकादेशः । हरेः । हर्य्योः । हरीणाम्

अच्च घेः ।७।३।११९।

इदुद्भ्यामुत्तरस्य ङेरौत् । घेरत् । हरौ । हरिषु । एवङ्कव्यादयः ॥

अनङ् सौ ।७।१।९३।

सख्युरङ्गस्यानङ् देशोऽसम्बुद्धौ सौ ।

अलोऽन्त्यात्पूर्व्व उपधा १।१।६५।

अन्त्यादलः पूर्व्वो वर्ण उपधासञ्ज्ञः ॥

सर्व्वनामस्थाने चासम्बुद्धौ ।६।४।८।

नान्तस्योपधाया दीर्घोऽसंबुद्धौ सर्व्वनामस्थाने ॥

अपृक्त एकाल्प्रत्ययः । १।२।४१ ॥

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।६।१।६८।

हलन्तात्परन्दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥

नलोपः प्रातिपदिकान्तस्य ८।२।७।

प्रातिपदिकसञ्ज्ञकं यत्पदन्तदन्तस्य नस्य लोपः । सखा ॥

सख्युरसंबुद्धौ ।७।१।९२।

सख्युरङ्गात्परं संबुद्धिवर्ज्जं सर्व्वनामस्थानं णिद्वत्स्यात् ॥

अचो ञ्णिति ।७।२।११५

अजन्ताङ्गस्य वृद्धिर्ञ्णिति णिति च परे। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। सख्ये॥

ख्यत्यात्परस्य। ६। १। ११२।

खिति शब्दाभ्यां ङ्यीती शब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसो रुत उः। सख्युः।

औत्। ७। ३। ११८।

इतः परस्य ङेरौत्। सख्यौ। शेषं हरिवत्।

पतिः समास एव। १। ४। ८।

घिसञ्ज्ञः। पत्ये। पत्युः २ पत्यौ। शेषं हरिवत्। समासे तु। भूपतये। कतिशब्दो बहुवचनान्तः॥

बहुगणवतुडति सङ्ख्या। १। १। २३।

डति च। १। १। २५।

डत्यन्ता सङ्ख्या षट्सञ्ज्ञा स्यात्॥

षड्भ्यो लुक्। ७। १। २२।

जश्शसोः॥

प्रत्ययस्य लुक्श्लुलुपः। १। १। ६१।

लुक्श्लुलुप् शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्सञ्ज्ञं स्यात्॥

प्रत्ययलोपे प्रत्ययलक्षणम्। १। १। ६२।

प्रत्यये लुप्ते तदाश्रितङ्कार्य्यं स्यात्। इति जसि चेति गुणे प्राप्ते

नलुमताङ्गस्य। १। १। ६३।

लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्य्यन्न स्यात्। कति २। कतिभिः। कतिभ्यः २। कतीनाम्। कतिषु। युष्मदस्मद्षट्सञ्ज्ञकास्त्रिषु सरूपाः। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २॥

6203.

त्रेस्त्रयः।७।१।५३।

आमि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि। प्रियत्रयाणाम्॥

त्यदादीनामः।७।२।१०२।

एषामकारो विभक्तौ। द्विपर्य्यन्तानामेवेष्टिः। द्वौ। द्वौ। द्वाभ्याम् ३। द्वयोः २ पातिलोकमिति पपीः सूर्य्यः॥

दीर्घाज्जसि च।६।१।१०५।

दीर्घाज्जसि इचि च परे न पूर्व्वसवर्णदीर्घः। पप्यौ। पप्यः हे पपीः। पपीम्। पपीन्। पप्या। पपीभ्याम्। पपीभिः। पप्ये पपीभ्यः। पप्यः। पप्योः २। दीर्घत्वान्न नुट्। पप्याम्। ङौ तु सवर्णदीर्घः। पपी। पपीषु। एवं वातप्रम्यादयः। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी॥

यूस्त्र्याख्यौ नदी।१।४।३।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसञ्ज्ञौ स्तः। प्रथमलिङ्गग्रहणञ्च। पूर्व्वं स्त्र्याख्यस्योपसर्ज्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः॥

अम्बार्थनद्योर्ह्रस्वः।७।३।१०७।

सम्बुद्धौ। हे बहुश्रेयसि॥

आण्नद्याः।७।३।११२।

नद्यन्तात्परेषां ङितामाडागमः॥

आटश्च।६।१।९०।

आटोऽचि परे वृद्धिरेकादेशः। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयसीनाम्॥

ङेराम्नद्याम्नीभ्यः।७।३।११६।

नद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम्। बहुश्रेयस्याम्। शेषम्पपीवत्। अङ्यन्तत्वान्न सुलोपः। अतिलक्ष्मीः। शेषम्बहु

श्रेयसीवत् । प्रधीः ॥

अचिश्नुधातुभ्रुवां य्वोरियङुवङौ । ६।४।७७।

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्ये यङुवङौ स्तोऽजादौ प्रत्ययेपरे । इति प्राप्ते ॥

एरनेकाचोऽसंयोगपूर्वस्य । ६।४।८२।

धात्ववयवसंयोगपूर्वो न भवति यदिवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यौ । प्रध्यः । प्रध्यि । शेषं पपीवत् एवङ्ग्रामणीः । ङौतु ग्रामण्याम् । अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ ॥

गतिश्च । १।४।६०।

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । गतिकारकेतरपूर्वपदस्य यण्नेष्यते । शुद्धधियौ ।

न भूसुधियोः । ६।४।८५।

एतयोरचि सुपि यण् न । सुधियौ । सुधियः । इत्यादि । सुखमिच्छतीति सुखीः । सुतीः । सुख्यौ । सुत्यौ । सुख्युः । सुत्युः । शेषं प्रधीवत् । शम्भुर्हरिवत् । एवम्भान्वादयः ॥

तृज्वत्क्रोष्टुः । ७।१।९५।

असम्बुद्धौ सर्वनामस्थाने क्रोष्टुशब्दस्य क्रोष्टृ प्रयोक्तव्य इत्यर्थः ॥

ऋतो ङिसर्वनामस्थानयोः । ७।३।११०।

ऋतोऽङ्गस्य गुणो ङौ सर्वनामस्थाने च । इति प्राप्ते ॥

ऋदुशनस्पुरुदंसोऽनेहसां च । ७।१।९४।

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ॥

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। ६।४।११।

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टून्॥

विभाषा तृतीयादिष्वचि। ७।१।९७।

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे॥

ऋत उत्। ६।१।१११।

ऋतो ङसिङसोरति उदेकादेशो रपरः।

रात्सस्य। ८।२।२४।

रेफात्संयोगान्तस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः। क्रोष्टोः। नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन। क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्। हूहूः। हूह्वौ। हूहूम्। इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः। अतिचमूनाम्। खलपूः॥

ओः सुपि। ६।४।८३।

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः। वर्षाभूः।

वर्षाभ्वश्च। ६।४।८४।

अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि। दृन्भूः। दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः। दृन्भ्वौ। एवं कारभूः। धाता। हे धातः। धातारौ। धातारः। ऋवर्णान्नस्य णत्वं वाच्यम्। धातॄणाम्। एवं नप्त्रादयः। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्। एवं जामात्रादयः। ना। नरौ।

नृच ६।४।६।

अस्य नामि वा दीर्घः। नृणाम्। नृणाम्।

गोतो णित् ७।१।९०।

ओकाराद्विहितं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः।

औतोऽम्शसोः ६।१।९३।

ओतोऽम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा गवे। गोः २। इत्यादि।

रायो हलि ७।२।८५।

अस्याकारादेशो हलि विभक्तौ। राः। रायौ। रायः। राभ्यामित्यादि। ग्लौः। ग्लावौ। ग्लावः। ग्लौभ्यामित्यादि।

इत्यजन्ताः पुल्लिङ्गाः॥

अथाजन्तस्त्रीलिङ्गाः

रमा॥

औङ आपः ७।१।१८।

आबन्तादङ्गात्परस्यौङः शी स्यात्। औङित्यौकारविभक्ते-स्संज्ञा। रमे। रमाः॥

सम्बुद्धौ च ७।३।१०६।

आप एकारस्स्यात्सम्बुद्धौ। एङ्ह्रस्वादिति सम्बुद्धिलोपः। हे रमे हे रमे। हे रमाः। रमाम्। रमे। रमाः॥

आङि चापः ७।३।१०५।

आङि ओसि चाप एकारः। रमया। रमाभ्याम् ३। रमाभिः॥

याडापः ७।३।११३।

आपो ङितो याट्। वृद्धिः। रमायै। रमायाः २। रमायाः २। रमयोः। रमाणाम्। रमायाम्। रमासु। एवं दुर्गाम्बिकादयः॥

सर्वनाम्नस्स्याड्ढ्रस्वश्च ७।३।११४।

आबन्तात्सर्व्वनाम्नो ङित स्याडापश्च ह्रस्वः। सर्व्वस्यै। सर्व्वस्याः। सर्व्वासाम्। सर्व्वस्याम्। शेषं रमावत्। एवं विश्वादयआबन्ताः॥

विभाषादिक्समासे बहुव्रीहौ। १।१। २८।

सर्व्वनामता वा। उत्तरपूर्व्वस्यै। उत्तरपूर्व्वायै। तीयस्येति वा सञ्ज्ञा। द्वितीयस्यै। द्वितीयायै। एवन्तृतीया। अम्बार्थेति ह्रस्वः हे अम्ब। हे अक्क। हे अल्ल। जरा। जरसौ। जरे। इत्यादि। पक्षे रमावत्। गोपा विश्वपावत्। मतिः। मती। मत्या॥

ङितिह्रस्वश्च १।४।६।

इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गौ यू ईदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसञ्ज्ञौ स्तो ङिति। मत्यै। मतये। मत्याः २। मतेः २

इदुद्भ्याम् ७।३।११७।

इदुद्भ्यान्नदीसञ्ज्ञकाभ्याम्परस्य ङेः आम्। मत्याम्। मतौ। शेषं हरिवत्। एवम्बुद्ध्यादयः।

त्रिचतुरोस्स्त्रियान्तिसृचतसृ। ७।२।९९।

स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ॥

अचिरऋतः। ७।२।१००।

तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामभावः तिस्रः २ तिसृभिः। तिसृभ्यः २। आमि नुट्॥

नतिसृचतसृ। ६।४।४।

एतयोर्नामि दीर्घो न। तिसृणाम्। तिसृषु। द्वे २। द्वाभ्याम् ३। द्वयोः २। गौरी। गौर्य्यौ। गौर्य्यः। हे गौरि। गौर्य्यै इत्यादि। एवन्नद्यादयः। लक्ष्मीः। शेषं गौरीवत्। एवन्तरीतन्त्र्यादयः। स्त्री। हे स्त्रि॥

स्त्रियाः ६।४।७९।

अस्येयङ् जादौ प्रत्यये परे। स्त्रियौ। स्त्रियः॥

वाम्शसोः ६।४।८०।

स्त्रिया इयङ्। स्त्रियम्। स्त्रीम्। स्त्रियः। स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः। परत्वान्नुट्। स्त्रीणाम्। स्त्रीषु। श्रीः। श्रियौ। श्रियः॥

नेयङुवङ्स्थानावस्त्री। १।४।४।

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसञ्ज्ञौ न स्तो न तु स्त्री। हे श्रीः। श्रियै। श्रिये। श्रियाः। श्रियः॥

वामि। १।४।५।

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसञ्ज्ञौ स्तो न तु स्त्री। श्रीणाम्। श्रियाम्। श्रियि। श्रियाम्। धेनुर्मतिवत्॥

स्त्रियाञ्च। ७।१।९६।

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते॥

ऋन्नेभ्यो ङीप्। ४।१।५।

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप्। क्रोष्ट्री। गौरीवत्। भ्रूः श्रीवत्। स्वयम्भूः पुंवत्।

न षट्स्वस्रादिभ्यः। ४।१।१०।

ङीप्टापौन। स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा। याता मातेति सप्तैते स्वस्रादय उदाहृताः। स्वसा। स्वसारौ। माता पितृवत्। शसि मातॄः। द्यौर्गोवत्। राः पुंवत्। नौर्ग्लौवत्।

इत्यजन्ताः स्त्रीलिङ्गाः

अथाजन्तनपुंसकलिङ्गाः॥

अतोऽम्। ७।१।२४।

अतोऽङ्गात् क्लीबात्स्वमोरम्। ज्ञानम्। एङ्ह्रस्वादिति हल्लोपः। हे ज्ञान॥

नपुंसकाच्च। ७।१।१९।

क्लीबादौङः शी स्यात्। भसञ्ज्ञायाम्॥

यस्येति च। ६।४।१४८।

ईकारे तद्धिते च भस्येवर्णावर्णयोर्लोपः इत्यल्लोपे प्राप्ते॥

औङः श्यां प्रतिषेधो वाच्यः। ज्ञाने॥

जश्शसोः शिः। ७।१।२०।

क्लीबात्।

शि सर्वनामस्थानम्। १।१।४२।

नपुंसकस्य झलचः। ७।१।७२।

झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने॥

मिदचोऽन्त्यात्परः। १।१।४७।

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषम्पुंवत्॥ एवं धन वन फलादयः॥

अद्ड्डुतरादिभ्यः पञ्चभ्यः। ७।१।२५।

एभ्यः क्लीबेभ्यः स्वमोरद्ड्डादेशः स्यात्॥

टेः। ६।४।१४३।

डिति भस्य टेर्लोपः। कतरत्। कतरद्। कतरे। कतराणि। हे कतरत्। शेषम्पुंवत्। एवङ्कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमस्य त्वन्यतममित्येव। एकतरात्प्रतिषेधः। एकतरम्।

ह्रस्वो नपुंसके प्रातिपदिकस्य। १।२।४७।

अजन्तस्येत्येव। श्रीपम्। ज्ञानवत्॥

स्वमोर्नपुंसकात्। ७।१।२३।

लुक्स्यात्। वारि॥

इकोऽचि विभक्तौ। ७।१।७३।

इगन्तस्य क्लीबस्य नुमचि विभक्तौ। वारिणी। वारीणि॥ नलुमतेत्यस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः। हे वारि। हे वारे। घेर्ङितीति गुणे प्राप्ते। वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्व्वविप्रतिषेधेन। वारिणे। वारिणः। वारिणोः २। नुमचिरेति नुट्। वारीणाम्। वारिणि। हलादौ। हरिवत्॥

### अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५

टादावचि॥

### अल्लोपोऽनः। ६।४।१३४॥

अङ्गावयवोऽसर्व्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः। दध्ना। दध्ने। दध्नः २। दध्नोः॥

### विभाषा ङिश्योः। ६।४।१३६

अङ्गावयवोऽसर्व्वनामस्थानपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः। दध्नि। दधनि। शेषम्वारिवत्। एवमस्थिसक्थ्यक्षि। सुधि। सुधिनी। सुधीनि। हे सुधे। हे सुधि। सुधिनेत्यादि। मधु। मधुनी। मधूनि। हे मधो। हे मधु। सुलु। सुलुनी। सुलूनि। सुलुनेत्यादि। धातृ। धातृणी। धातॄणि। धातॄणाम्। हे धातः। एवं ज्ञात्रादयः॥

### एच इग्घ्रस्वादेशे। १।१।४८।

प्रद्यु। प्रद्युनी। प्रद्यूनि। प्रद्युनेत्यादि। प्ररि। प्ररिणी। प्ररीणि। प्ररिणा। एकदेशविकृतमनन्यवत्। प्रराभ्याम्। प्ररीणाम्। सुनु। सुनुनी। सुनूनि। सुनुनेत्यादि॥

### इत्यजन्तनपुंसकलिङ्गाः॥

### अथ हलन्तपुंल्लिङ्गाः॥

### हो ढः। ८।२।३१।

झलि पदान्ते च। लिट्। लिड्। लिहौ। लिहः। लिड्भ्याम्। लिट्सु-

लिट्त्सु ॥

दादेर्धातोर्घः। ८।२।३२।

झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः ॥

एकाचो बशो भष् झषन्तस्य स्ध्वोः। ८।२।३७।

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च। धुक्। धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु ॥

वा द्रुहमुहष्णुहष्णिहाम्। ८।२।३३

एषां हस्य वा घो झलि पदान्ते च। ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्। ध्रुड्भ्याम्। ध्रुक्षु। ध्रुट्सु। ध्रुट्त्सु। एवम्मुह् ॥

धात्वादेः षः सः। ६।१।६४।

स्नुट्। स्नुड्। स्नुक्। स्नुग्। एवं स्निह् ॥

इग्यणः सम्प्रसारणम्। १।१।४५

वाह ऊठ्। ६।४।१३२।

भस्य वाहः सम्प्रसारणमूठ् ॥

सम्प्रसारणाच्च। ६।१।१०८।

सम्प्रसारणादचि पूर्वरूपमेकादेशः। विश्वौहः। विश्वौहः। इत्यादि ॥

चतुरनडुहोरामुदात्तः। ७।१।९८।

सावनडुहः। ७।१।८२

नुम्। अनड्वान्।

अम् सम्बुद्धौ। ७।१।९९।

हे अनड्वन्। अनड्वाहौ। २। अनडुहः ॥

वसुस्रंसुध्वंस्वनडुहां दः। ८।२।७२

सान्तस्य वस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। सान्तेति किम्। विद्वान्। पदान्तेति किम्। स्रस्तम्। ध्व-

सम्॥

सहेः साडः सः। ८।३।५६।

साड्रूपस्य सहेः सस्य मूर्द्धन्यादेशः। तुराषाट्। तुराषाड्। तुरासाहौ। तुरासाहः। तुराषाड्भ्यामित्यादि॥

दिव औत्। ७।१।८४।

दिविति प्रातिपदिकस्यौत्स्यात्सौ। सुद्यौः। सुदिवौ॥

दिव उत्। ६।१।१३१।

पदान्ते। सुद्युभ्याम्। इत्यादि। चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः॥

षट्चतुर्भ्यश्च। ७।१।५५।

एभ्य आमो नुडागमः॥

रषाभ्यान्नो णः समानपदे। ८।४।१।

अचोरहाभ्यान्द्वे॥

रोः सुपि। ८।३।१६।

रोरेव विसर्गः सुपि। षत्वम्। षस्य द्वित्वे प्राप्ते॥

शरोऽचि। ८।४।४९।

अचिपरे शरो न द्वे स्तः। चतुर्षु॥

मो नो धातोः। ८।२।६४।

पदान्ते। प्रशान्॥

किमः कः। ७।२।१०३।

विभक्तौ। कः। कौ। के। इत्यादि। सर्व्ववत्॥

इदमो मः। ७।२।१०८

सौ। त्यदाद्यत्वापवादः॥

इदोऽय् पुंसि। ७।२।१११।

इदम इदोऽय् सौ पुंसि। अयम्। त्यदाद्यत्वे॥

अतो गुणे ६।१।९७

अपदान्तादतो गुणे पररूपमेकादेशः॥

दश्च ७।२।१०९

इदमो दस्य मः स्याद्विभक्तौ। इमौ। इमे। त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः॥

अनाप्यकः ७।२।११२

अककारस्य इदम इदोऽनापि विभक्तौ। आबिति प्रत्याहारः। अनेन॥

हलि लोपः ७।२।११३

अककारस्येदम इदो लोप आपि हलादौ। नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे॥

आद्यन्तवदेकस्मिन् १।१।२१

एकस्मिन् क्रियमाणं कार्यमादाविवान्त इव स्यात्। सुपि चेति दीर्घः। आभ्याम्॥

नेदमदसोरकोः ७।१।११

अककारयोरिदमदसोर्भिस ऐस् न। एभिः। अस्मै। एभ्यः। अस्मात्। अस्य। अनयोः २। एषाम्। अस्मिन्। एषु॥

द्वितीयाटौस्स्वेनः २।४।३४

इदमेतदोरन्वादेशे। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः। यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति। अनयोः पवित्रं कुलम् एनयोः प्रभूतं स्वमिति। एनम्। एनौ। एनान्। एनेन। एनयोः २। राजा॥

नङिसम्बुद्ध्योः ८।२।८

नस्य लोपो न ङौ सम्बुद्धौ च। हे राजन्॥ ङावुत्तरपदे प्रतिषेधः

चल्लोपः। राजानौ। राजानः। राज्ञः॥

न लोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति। ८।२।२।

सुब्विधौ स्वरविधौ सञ्ज्ञाविधौ कृतितुग्विधौ च नलोपोऽसिद्धो नान्यत्र। राजाश्व इत्यादौ न। इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न। राजभ्याम्। यज्वा। यज्वानौ। यज्वानः॥

न संयोगाद्वमन्तात् ६।४।१३७

वमान्तसंयोगादनोऽकारस्य लोपो न। यज्वनः। यज्वना। यज्वभ्याम्। ब्रह्मणः। ब्रह्मणा॥

इन्हन्पूषार्य्यम्णां शौ। ६।४।१२।

एषां शावेवोपधाया दीर्घो नान्यत्र। इति निषेधे प्राप्ते॥

सौ च। ६।४।१३।

इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ। वृत्रहा। हे वृत्रहन्

एकाजुत्तरपदे णः ८।४।१२

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्व्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः। वृत्रहणौ॥

हो हन्तेर्ञ्णिन्नेषु ७।३।५४।

ञिति णिति प्रत्यये नकारे च परे हन्ते र्हकारस्य कुत्वम्। वृत्रघ्नः इत्यादि। एवं शार्ङ्गिन् यशस्विन् अर्य्यमन् पूषन्॥

मघवा बहुलम् ६।४।१२८

मघवन् शब्दस्य वा तृ इत्यन्तादेशः। ऋ इत्॥

उगिदचां सर्व्वनामस्थानेऽधातोः ७।१।७०

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्व्वनामस्थाने मघवान्। मघवन्तौ। मघवन्तः। हे मघवन्। मघवद्भ्याम्। तृत्वाभावे। मघवा। सुटि राजवत्॥

श्वयुवमघोनामतद्धिते ।६।४।१३३।

अन्नन्तानामेषामतद्धिते सम्प्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन्युवन् ॥

न सम्प्रसारणे सम्प्रसारणम् ६।१।३७

यूनः । यूना । युवभ्याम् । इत्यादि । अर्वा । हे अर्वन् ॥

अर्वणस्त्रसावनञः ।६।४।१२७।

नञा रहितस्यार्वन्नन्तस्याङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥

पथिमथ्यृभुक्षामात् ।७।१।८५।

सौ ॥

इतोऽत्सर्वनामस्थाने ७।१।८६

पथ्यादेः ॥

थो न्थः ।७।१।८७

पथि मथो स्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । पन्थानौ पन्थानः ॥

भस्य टेर्लोपः ।७।१।८८।

भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् । एवम्मथिन्नृभुक्षिन् ॥

ष्णान्ता षट् ।१।१।२४।

षान्ता नान्ता च सङ्ख्या षट्सञ्ज्ञा स्यात् । पञ्चन् शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः २ । नुट् ।

नोपधायाः ।६।४।७।

नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु ।

अष्टन आ विभक्तौ ७।२।८४।

हलादौ वा स्यात् ॥

अष्टाभ्य औश् ७।१।२१।

कृताकारादष्टनो जश्शसोरौश्। अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। अष्टौ। अष्टाभ्यः २। अष्टानाम्। अष्टासु। आत्वाभावे अष्ट पञ्चवत्।

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९

एभ्यः क्विन् अञ्चेस्सुप्युपपदे। युजिक्रुञ्चोः केवलयोः। क्रुञ्चेर्नलोपाभावश्च निपात्यते कनावितौ॥

कृदतिङ्।३।१।९३।

अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञस्स्यात्॥

वेरपृक्तस्य ६।१।६७।

लोपः॥

क्विन्प्रत्ययस्य कुः ८।२।६२।

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते। इत्यस्यासिद्धत्वाच्चोः कुरिति कुत्वम्। ऋत्विक्। ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम्॥

युजेरसमासे।७।१।७१।

युजेस्सर्वनामस्थाने नुम् स्यादसमासे। सुलोपः। संयोगान्तलोपः। कुत्वेन नस्य ङः। युङ्। युञ्जौ। युञ्जः। युग्भ्याम्॥

चोः कुः ८।२।३०।

चवर्गस्य कवर्गस्स्याज्झलि पदान्ते च। सुयुक्। सुयुजौ। सुयुग्भ्याम्। खन्। खञ्जौ। खन्भ्याम्॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राज च्छशां षः ८।२।३६।

झलि पदान्ते च। जश्त्वचर्त्वे। राट्। राड्। राजौ। राजः। राड्भ्याम्। एवं विभ्राट्। देवेट्। विश्वसृट्। परौ व्रजेः षः पदान्ते परावुपपदे व्रजेः क्विप् स्यात् दीर्घश्च पदान्ते षत्वमपि। परि-

व्राट्। परिव्राड्। परिव्राजौ॥

विश्वस्य वसुराटोः। ६।३।१२८।

दीर्घः। विश्वाराट्। विश्वाराड्। विश्वराजौ। विश्वाराड्भ्याम्।

स्कोः संयोगाद्योरन्ते च। ८।२।२९

पदान्ते झलि च यः संयोगस्तदाद्योः स्कोर्लोपः। भृट्। भृड्।

सस्य श्चुत्वेन शः। झलां जश् झशि इति शस्य जः। भृज्जौ

। भृड्भ्याम्। त्यदाद्यत्वं पररूपत्वम्॥

तदोः सः सावनन्त्ययोः। ७।२।१०६।

त्यदादीनान्तदयोरनन्त्ययोः सः स्यात्सौ। स्यः। त्यौ। त्ये।

सः। तौ। ते। यः। यौ। ये। एषः। एतौ। एते॥

ङे प्रथमयोरम्। ७।१।२८।

युष्मदस्मद्भ्याम्परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चा-

मादेशः।

त्वाहौ सौ ७।२।९४

अनयोर्मपर्यन्तस्य त्वाहौ आदेशौ स्तः॥

शेषे लोपः। ७।२।९०।

एतयोष्टिलोपः। त्वम्। अहम्॥

युवावौ द्विवचने ७।२।९२

द्व्योरुक्त्यावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ॥

प्रथमायाश्च द्विवचने भाषायाम्। ७।२।८८॥

औङ्यनयोरात्वं लोके। युवाम्। आवाम्॥

यूयवयौ जसि ७।२।९३

अनयोर्मपर्यन्तस्य। यूयम्। वयम्॥

त्वमावेकवचने ७।२।९७

एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥

द्वितीयायाञ्च ७।२।८७।

अनयोरात्स्यात्। त्वाम्। माम्॥

शसो न। ७।१।२९

आभ्यां शसो नस्स्यादमोऽपवादः। आदेः परस्य। संयोगान्तलोपः। युष्मान्। अस्मान्॥

योऽचि। ७।२।८९

अनयोर्यकारादेशस्स्यादनादेशेऽजादौ परतः। त्वया। मया॥

युष्मदस्मदोरनादेशे ७।२।८६

अनयोरात्स्यादनादेशे हलादौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥

तुभ्यमह्यौ ङयि ७।२।९५

अनयोर्मपर्यन्तस्य। टिलोपः। तुभ्यम्। मह्यम्॥

भ्यसोऽभ्यम् ७।१।३०।

आभ्यां भ्यसः। युष्मभ्यम्। अस्मभ्यम्॥

एकवचनस्य च ७।१।३२

आभ्यां ङसेरत्। त्वत्। मत्॥

पञ्चम्या अत् ७।१।३१

आभ्यां पञ्चम्या भ्यसोऽत्स्यात्। युष्मत्। अस्मत्॥

तवममौ ङसि ७।२।९६।

अनयोर्मपर्यन्तस्य॥

युष्मदस्मद्भ्यां ङसोऽश् ७।१।२७।

तव। मम। युवयोः। आवयोः॥

साम आकम् ७।१।३३।

आभ्यां साम आकम्। युष्माकम्। अस्माकम्। त्वयि। मयि। युवयोः। आवयोः। युष्मासु। अस्मासु॥

युष्मदस्मदोष्षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ॥ ८।१।२०।

पदात्परयोरपादादौ स्थितयोष्षष्ठ्यादिविशिष्टयोर्वान्नौ इत्यादेशौ स्तः ॥

बहुवचनस्य वस्नसौ ८।१।२१।

उक्तविधयोरनयोष्षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥

तेमयावेकवचनस्य ८।१।२२।

उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्तेमेएतौ स्तः ॥

त्वामौ द्वितीयायाः । ८।१।२३।

द्वितीयैकवचनान्तयोस्त्वामा इत्यादेशौ स्तः । श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः । सुखं वां नौ ददात्वीशः पतिर्वामपि नो हरिः । सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वस्सनः ॥

एकवाक्ये युष्मदस्मदादेशा वक्तव्याः । अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति धाता तव भक्तोऽस्ति तस्मै ते नम इत्येव ।

सुपात् । सुपाद् । सुपादौ ॥

पादः पत् । ६।४।१३०।

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । सुपदः । सुपदा । सुपाद्भ्याम् । अग्निमत् । अग्निमथौ । अग्निमथम् ।

अनिदितां हल उपधायाः क्ङिति । ६।४।२४।

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति । नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः ।

अचः । ६।४।१३८।

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः ॥

चौ । ६।३।१३८।

लुप्ताकारनकाराञ्चतौ परे पूर्व्वस्याणो दीर्घः। प्राचः। प्राग्भ्याम्। प्रत्यङ्। प्रत्यञ्चौ। प्रतीचः। प्रत्यग्भ्याम्। उदङ्। उदञ्चौ।

उदईत्। ६।४।१३९।

उच्छब्दात्परस्य लुप्तनकाराञ्चतेर्भस्याकारस्य ईत्। उदीचः। उदग्भ्याम्॥

समः समि ६।३।९३।

अप्रत्ययान्ते ऽञ्चतौ। सम्यङ्। सम्यञ्चौ। समीचः। सम्यग्भ्याम्॥

सहस्य सध्रिः। ६।३।९५॥

तथा। सध्र्यङ्॥

तिरसस्तिर्य्यलोपे। ६।३।९४।

अलुप्ताकारे ऽञ्चतावप्रत्ययान्ते तिरसस्तिर्य्यादेशः। तिर्य्यङ्। तिर्य्यञ्चौ। तिरश्चः। तिर्य्यग्भ्याम्॥

नाञ्चेः पूजायाम्। ६।४।३०।

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न। प्राङ्। प्राञ्चौ। नलोपाभावादलोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु। एवम्पूजार्थे प्रत्यङादयः। क्रुङ्। क्रुञ्चौ। क्रुङ्भ्याम्। पयोमुक्। पयोमुग्। पयोमुचौ। पयोमुग्भ्याम्। उगित्वान्नुम्॥

सान्तमहतः संयोगस्य। ६।४।१०।

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घो ऽसम्बुद्धौ सर्व्वनामस्थाने। महान्। महान्तौ। महान्तः। हे महन्। महद्भ्याम्॥

अत्वसन्तस्य चाऽधातोः। ६।४।१४।

अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासम्बुद्धौ। धीमान्। धीमन्तौ। धीमन्तः। हे धीमन्। शसादौ महद्वत्। भाते

डवतुः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। भवान्। भवन्तौ। शत्रन्तस्य भवन्॥

उभे अभ्यस्तम्। ६। १। ५॥

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते उभे समुदिते अभ्यस्तसंज्ञे स्तः॥

नाऽभ्यस्ताच्छतुः। ७। १। ७८।

अभ्यस्ताच्छतुर्नुम् न। ददत्। ददतौ॥

जक्षित्यादयष्षट्। ६। १। ६।

षड्धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षतौ। जक्षतः। एवं जाग्रत्। दरिद्रत्। शासत्। चकासत्। गुप्। गुपौ। गुपः। गुब्भ्याम्॥

त्यदादिषु दृशोऽनालोचने कञ्च। ३। २। ६०।

त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेः कञ् चात् क्विन्॥

आ सर्वनाम्नः। ६। ३। ९१।

दृग्दृशवतुषु। तादृक्। तादृशौ। तादृशः। तादृग्भ्याम्। व्रश्चेति षः। जश्त्वचर्त्वे। विड्। विट्। विशौ। विशः। विड्भ्याम्।

नशेर्वा। ८। २। ६३।

नशेः कवर्गोऽन्तादेशो वा पदान्ते। नक्। नट्। नशौ। नशः। नग्भ्याम्। नड्भ्याम्॥

स्पृशोऽनुदके क्विन्। ३। २। ५८॥

अनुदके सुप्युपपदे स्पृशेः क्विन्। घृतस्पृक्। घृतस्पृशौ। घृतस्पृशः। दधृक्। दधृषौ। दधृग्भ्याम्। रत्नमुट्। रत्नमुषौ। रत्नमुड्भ्याम्। षट्। षड्भिः। षड्भ्यः। षण्णाम्। षट्सु। रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषोरिति रुत्वम्॥

वोरुपधाया दीर्घ इकः। ८। २। ७६।

रेफवान्तयोरुपधाया इको दीर्घः पदान्ते। पिपठीः। पिपठिषौ।

पिपठीर्भ्याम् ॥

नुम्विसर्ज्जनीयशर्व्यवायेऽपि ८।३।५८ ॥

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्द्ध-न्यादेशः। ष्टुत्वेन पूर्व्वस्य षः। पिपठीष्षु। पिपठीःषु। चिकीः। चिकीर्षौ। चिकीर्भ्याम्। चिकीर्षु। विद्वान्। विद्वांसौ। हे वि-द्वन्॥

वसोस्सम्प्रसारणम् ६।४।१३१।

वस्वन्तस्य भस्य सम्प्रसारणं स्यात्। विदुषः। वसुस्रंस्विति दः। विद्वद्भ्याम्॥

पुंसोऽसुङ्। ७।१।८९।

सर्व्वनामस्थाने। पुमान्। हे पुमन्। पुमांसौ। पुंसः। पुम्भ्याम्। पुंसु। ऋदुशनेत्यनङ्। उशना। उशनसौ। अस्य सम्बुद्धौ। वानङ् नलोपश्च वा वाच्यः। हे उशन। हे उशनन्। हे उश-नः। हे उशनसौ। उशनोभ्याम्। उशनस्सु। अनेहाः। अनेह-सौ। हे अनेहः। वेधाः। वेधसौ। हे वेधः। वेधोभ्याम्॥

अदस औ सुलोपश्च। ७।२।१०७।

अदस औत्स्यात्सौ सुलोपश्च। तदोरिति सः। असौ। त्यदा-द्यत्वम्। पररूपत्वम्। वृद्धिः॥

अदसोऽसेर्दादु दो मः ८।२।८०।

अदसोऽसान्तस्य दात्परस्य उदूतौ दस्य मश्च। आन्तरतम्या-द्ध्रस्वस्य उः दीर्घस्य ऊः। अमू। जसः शी। गुणः॥

एत ईद्बहुवचने। ८।२।८१।

अदसो दात्परस्यैत ईद्दस्य मो बहूक्तौ। अमी। पूर्व्वत्रासि-द्धमिति विभक्तिकार्य्यम्प्राक्पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। मुत्वे कृते घिसञ्ज्ञायां नाभावः॥

नमुने। ८। २। ३।

नाभावे कर्त्तव्ये कृते च मुभावो नासिद्धः। अमुना। अमूभ्याम्। अमीभिः। अमुष्मै। अमीभ्यः। अमुष्मात्। अमुष्य। अमुयोः। अमीषाम्। अमुष्मिन्। अमीषु॥

इति हलन्ताः पुल्लिङ्गाः॥

अथ हलन्ताः स्त्रीलिङ्गाः॥

नहोधः। ८। २। ३४।

झलि पदान्ते च॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ। ६। ३। ११६।

क्विबन्तेषु पूर्वपदस्य दीर्घः। उपानत्। उपानहौ। उपानत्सु। क्विबन्तत्वात् कुत्वेन घः। उष्णिक्। उष्णिहौ। उष्णिग्भ्याम्। द्यौः। दिवौ। दिवः। द्युभ्याम्। गीः। गिरौ। गिरः। एवम्पूः। चतस्रः। चतसृणाम्। का। के। काः। सर्वावत्॥

यः सौ। ७। २। ११०।

इदमो दस्य यः। इयम्। त्यदाद्यत्वम्। पररूपत्वम्। टाप्। दश्चेति मः। इमे। इमाः। इमाम्। अनया। हलि लोपः। आभ्याम्। आभिः। अस्यै। अस्याः। अनयोः। आसाम्। अस्याम्। आसु। स्रक्। स्रजौ। स्रग्भ्याम्। त्यदाद्यत्वम्। टाप्। स्या। त्ये। त्याः। एवन्तद् एतद्। वाक्। वाचौ। वाग्भ्याम्। वाक्षु। अप्शब्दो नित्यम्बहुवचनान्तः। अप्तृन्निति दीर्घः। आपः॥

अपो भि। ७। ४। ४८।

अपस्तकारो भादौ प्रत्यये। अद्भिः। अद्भ्यः। अपाम्। अप्सु। दिक्। दिग्। दिशौ। दिग्भ्याम्। त्यदादिष्विति। दृशेः क्विन्विधानादन्यत्रापि कुत्वम्। दृक्। दृग्। दृशौ। दृग्भ्याम्। त्विट्। त्विषौ। त्विड्भ्याम्। ससजुषो रिति रुत्वम्। सजूः। सजुषौ।

मजूभ्याम्। आशीः। आशिषौ। आशीर्भ्याम्। असौ। उत्तमत्वे। अमू। अमूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्यः। अमुष्याः। अमुयोः। अमूषाम्। अमुष्मिन्। अमूषु॥

इति हलन्ताः स्त्रीलिङ्गाः॥

अथ हलन्तनपुंसकलिङ्गाः

स्वमोर्लुक्। दत्वम्। स्वनडुत्। स्वनडुही। चतुरनडुहो रित्याम्। स्वनड्वाहि। पुनस्तद्वत्। शेषम् पुंवत्। वाः। वारी। वारि। वार्भ्याम्। चत्वारि। किम्। के। कानि। इदम्। इमे। इमानि॥ अन्वादेशे नपुंसके एनद्वक्तव्यः। एनत्। एने। एनानि। एनेन एनयोः। अह्नः। विभाषा ङिश्योः। अह्नी। अहनी। अहानि॥

अहन्। ८।२।६८॥

अहन्नित्यस्य रुः पदान्ते। अहोभ्याम्। दण्डि। दण्डिनी। दण्डीनि। दण्डिभ्याम्। सुपथि। टिलोपः। सुपथी। सुपन्थानि ऊर्क्। ऊर्जी। ऊर्न्जि। नरजानां संयोगः। तत्। ते। तानि। यत्। ये। यानि। एतत्। एते। एतानि। गवाक्। गोची। गवाञ्चि पुनस्तद्वत्। गोचा। गवाग्भ्याम्। शकृत्। शकृती। शकृन्ति। ददत्॥

वा नपुंसकस्य। ७।१।७९।

अभ्यस्तात्परस्य वा नुम् सर्वनामस्थाने। ददन्ति। ददति। तुदत्॥

आच्छीनद्योर्नुम् ७।१।८०

अवर्णान्तादङ्गादुत्तरस्य शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः। तुदन्ती। तुदती। तुदन्ति। भात्। भान्ती। भाती। भान्ति। पचत्।

शप्श्यनोर्नित्यम् ७।१।८१।

शप् श्यनो र्नित्यम् ७।१।८१ ॥ शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम् स्यात् शीनद्योः ।
पचन्ती । पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति । धनुः । धनुषी । सान्तेति दीर्घः ॥ नुम् विसर्जनीयेति षः । धनूंषि । धनुषा । धनुर्भ्याम्
। एवं चक्षुर्हविरादयः । पयः । पयसी । पयांसि । पयसा । पयोभ्याम् ।
सुपुम् । सुपुंसी । सुपुमांसि । अदः । विभक्तिकार्य्यम् । उत्वमत्वे । अमू । अमूनि । शेषम्पुंवत् ॥

## इति हलन्त नपुंसकलिङ्गः ॥

## स्वरादिनिपातमव्ययम् ॥१।१।३७॥

स्वर् । अन्तर् । प्रातर् पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् पृथक् ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् जोषम् तूष्णीम् बहिस् अवस् समया निकषा स्वयम् वृथा नक्तम् नञ् हेतौ इद्धा अद्धा सामि वत् ब्राह्मणवत् क्षत्रियवत् सना उपधा सनत् सनात् अन्तरा अन्तरेण । ज्योक् कम् शम् सहसा विना नाना स्वस्ति स्वधा अलम् वषट् श्रौषट् वौषट् अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मृषा मिथ्या मुधा पुरा मिथो मिथस् प्रायस् मुहुस् प्रवाहुकम् प्रवाहिका आर्यहलम् अभीक्ष्णम् साकम् सार्द्धम् नमस् हिरुक् धिक् अथ अम् आम् प्रताम् प्रशान् प्रतान् मा माङ् आकृतिगणोयम् । च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् यत्र तत्र कच्चित् नह हन्त माकिम् माकीम् नकिः आकीम् माङ् नञ् यावत् तावत् त्वै न्वै द्वै रै श्रौषट् वौषट् स्वाहा स्वधा वषट् ओम् तुम् तथाहि खलु किल अथ सुष्ठु स्म आदह उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् अहंयुः । अस्तिक्षीरा । अ आ इ ई उ ऊ ए ऐ ओ औ पशु शुकम् यथाकथा च पाट् प्याट् अङ्ग है हे भोः अये घ विषु एकपदे युत् आतः ।

चादिरप्यादिगणः। तसिलादयः प्राक् पाशपः। शस् प्रभृतयः प्राक् समासान्तेभ्यः अम् आम् कृत्वोर्थाः। तसिवती। नानाञौ। एतदन्तमप्यव्ययम्। अतद्रुत्यादि॥

## कृन्मेजन्तः।१।१।३९।

कृद्यो मान्त एजन्तश्च तदन्तमव्ययम्। स्मारम्। स्मारम्। जीवसे पिबध्यै॥

## क्त्वातोसुन्कसुनः।१।१।४०।

एतदन्तमव्ययम्। कृत्वा। उदेतोः विसृपः॥

## अव्ययीभावश्च।१।१।४१।

अधिहरि॥

## अव्ययादाप्सुपः।२।४।८२।

अव्ययादापस्सुपश्च लुक्। तत्र शालायाम्। अथ। सदृशन्त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्। वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चैव हलन्तानां यथा वाचा निशा दिशा। अवगाहः। वगाहः। अपिधानम्। पिधानम्। इत्यव्ययानि॥

## भ्वादयः॥

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ्। एषु पञ्चमो लकारश्छन्दोमात्रगोचरः॥

## लः कर्मणि च भावे चाकर्मकेभ्यः ३।४।६९

लकाराः सकर्मकेभ्यः कर्मणि कर्त्तरि च स्युरकर्मकेभ्यो भावे कर्त्तरि च॥

## वर्त्तमाने लट्।३।२।१२३।

वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्वम्। भूसत्तायाम्। कर्त्तृविवक्षायां भू ल इति स्थिते।

तिप्तस्झिसिप्थस्थमिप्वस्मस्ताताञ्झथासाथां
ध्वमिड्वहिमहिङ्।३।४।७८।

एते ऽष्टादश लादेशाः स्युः॥

लः परस्मैपदम्।१।४।९९।

लादेशाः परस्मैपदसञ्ज्ञाः स्युः

तङानावात्मनेपदम्।१।४।१००॥

तङ् प्रत्याहारः शानच् कानचौ चैतत्सञ्ज्ञाः स्युः पूर्वसञ्ज्ञाऽपवादः॥

अनुदात्तङित आत्मनेपदम्।१।३।१२।

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात्

स्वरितञितः कर्त्रभिप्राये क्रियाफले।१।३।७२।

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले।

शेषात् कर्त्तरि परस्मैपदम्।१।३।७८।

आत्मनेपदनिमित्तहीनाद्धातोः कर्त्तरि परस्मैपदं स्यात्।

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः।१।४।१०१।

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्सञ्ज्ञाः स्युः॥

तान्येकवचनद्विवचनबहुवचनान्येकशः।१।४।१०२।

लब्धप्रथमादिसञ्ज्ञानि तिङस्त्रीणि त्रीणि प्रत्येकमेकवचनादिसञ्ज्ञानि स्युः॥

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः।१।४।१०५।

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमाने ऽप्रयुज्यमाने च मध्यमः।

अस्मद्युत्तमः।१।४।१०७।

तथाभूते ऽस्मद्युत्तमः।

शेषे प्रथमः।१।४।१०८।

भूतिद्रूतिजाते।

तिङ्‌शित्सार्व्वधातुकम्।३।४।११३।

तिङ्‌शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः॥

कर्त्तरि शप्।३।१।६८।

कर्त्रर्थे सार्व्वधातुके परे धातोः शप्॥

सार्व्वधातुकार्द्धधातुकयोः ७।३।८४

अनयोः परयोरिगन्ताङ्गस्य गुणः। अवादेशः। भवति। भवतः।

झोऽन्तः।७।१।३।

प्रत्ययावयवस्य झस्यान्तादेशः। अतो गुणे। भवन्ति। भवसि।

भवथः। भवथ॥

अतो दीर्घो यञि।७।३।१०१।

अतोऽङ्गस्य दीर्घो यञादौ सार्व्वधातुके। भवामि। भवावः।

भवामः। स भवति। तौ भवतः। ते भवन्ति। त्वम्भवसि। युवाम्भ-

वथः। यूयम्भवथ। अहम्भवामि। आवाम्भवावः। वयम्भवामः।

परोक्षे लिट्।३।२।११५।

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात्। लस्य तिबादयः

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः।३।४।८२

लिटस्तिबादीनां णलादयस्स्युः। भू अ इति स्थिते॥

भुवो वुग्लुङ्‌लिटोः।६।४।८८।

अचि।

लिटि धातोरनभ्यासस्य।६।१।८।

लिटि परे अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्त आदि

भूतादचः परस्य तु द्वितीयस्य। भूव् भूव् अ इति स्थिते॥

पूर्व्वोऽभ्यासः।६।१।४।

अत्र ये द्वे तयोः॥

हलादिः शेषः।७।४।६०।

अभ्यासस्यादिर्हल् शिष्यते अन्ये हलो लुप्यन्ते ॥

ह्रस्वः। ७। ४। ५९।

अभ्यासस्याचः ॥

भवतेरः। ७। ४। ७३।

भवतेरभ्यासस्योकारस्य अः स्याल्लिटि ॥

अभ्यासे चर्च्च। ८। ४। ५४

अभ्यासे झलां चरः स्युर्जशश्च झलां जशः खयां चर इति

विवेकः। बभूव। बभूवतुः। बभूवुः ॥

लिट् च। ३। ४। ११५।

लिडादेशस्तिङार्द्धधातुकसञ्ज्ञः ॥

आर्द्धधातुकस्येड्वलादेः ७। २। ३५

बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम ॥

अनद्यतने लुट्। ३। ३। १५।

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥

स्यतासी ऌलुटोः। ३। १। ३३।

धातोः स्यतासी एतौ प्रत्ययौ स्तो ऌलुटोः परतः। शबाद्यपवादः। ऌ इति लृङ्लृटो र्ग्रहणम् ॥

आर्द्धधातुकं शेषः। ३। ४। ११४।

लिङ् शिड्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्सञ्ज्ञः स्यात् दृद् ॥

लुटः प्रथमस्य डारौरसः। २। ४। ८५।

डित्वसामर्थ्यादभस्यापि टेर्लोपः। भविता ॥

तासस्त्योर्लोपः। ७। ४। ५०।

सादौ प्रत्यये ॥

रिच। ७। ४। ५१

राद्यौ प्रत्यये तथा। भविताहे। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः॥

लृट् शेषे च। ३।३।१३॥

भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां वा। स्यः। लृट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः॥

लोट् च। ३।३।१६२

विध्याद्यर्थेषु धातोर्लोट्॥

आशिषि लिङ्लोटौ। ३।३।१७३।

एरुः। ३।४।८६।

लोट इकारस्य उः। भवतु॥

तुह्योस्तातङाशिष्यन्यतरस्याम्। ७।१।३५

आशिषि तुह्योस्तातङ् वा। परत्वात्सर्वादेशः। भवतात्॥

लोटो लङ्वत्। ३।४।८५।

लोटस्तामादयस्सलोपः॥

तस्थस्थमिपां तान्तन्तामः ३।४।१०१

ङितश्चतुर्णां तामादयः। भवताम्। भवन्तु॥

सेर्ह्यपिच्च। ३।४।८७।

लोटः सेर्हिस्सोऽपिच्च॥

अतो हेः। ६।४।१०५।

लुक्। भव। भवतात्। भवतम्। भवत॥

मेर्निः। ३।४।८९।

लोटः॥

आडुत्तमस्य पिच्च। ३।४।९२॥

लोडुत्तमस्याट् पिच्च । हिन्योरुत्वन्न इकारोच्चारणसामर्थ्या-त् । भवानि ॥

ते प्राग्धातोः ।१।४।८०।

ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ॥

आनि लोट् ।८।४।१६।

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीति नस्य णः स्यात् । प्रभवाणि । दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । दुःस्थितिः । दुर्भवानि । अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् । अन्तर्भवाणि ॥

नित्यं ङितः ।३।४।९९।

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः । अलोऽन्त्यस्येति सलोपः । भवाव । भवाम ॥

अनद्यतने लङ् ।३।२।१११॥

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् ॥

लुङ्लङ्लृङ्क्ष्वडुदात्तः ।६।४।७१।

एष्वङ्गस्याट् ॥

इतश्च ।३।४।१००।

ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् । ३।३।१६१।

एष्वर्थेषु धातोर्लिङ् ॥

यासुट् परस्मैपदेषूदात्तो ङिच्च ।३।४।१०३।

लिङः परस्मैपदानां यासुडागमो ङिच्च ॥

लिङः सलोपोऽनन्त्यस्य। ७।२।७९।

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते ॥

अतो येयः। ७।२।८०।

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्येय्। गुणः।

लोपो व्योर्वलि। ६।१।६६।

भवेत्। भवेताम् ॥

झेर्जुस्। ३।४।१०८।

लिङः। भवेयुः भवेः। भवेतम्। भवेत। भवेयम्। भवेव। भवेम।

लिङाशिषि। ३।४।११६।

आशिषि लिङ् स्तिङार्द्धधातुक संज्ञः स्यात् ॥

किदाशिषि। ३।४।१०४।

आशिषि लिङो यासुट् कित्। स्कोः संयोगाद्योरिति सलोपः ॥

क्ङिति च। १।१।५ ॥

गित्किन्ङिन्निमित्ते इग्लक्षणौ गुणवृद्धी न स्तः। भूयात्। भूयास्ताम्।

भूयासुः। भूयाः। भूयास्तम्। भूयास्त। भूयासम्। भूयास्व। भूयास्म।

लुङ्। ३।२।११०।

भूतार्थे धातोर्लुङ् स्यात्।

माङि लुङ्। ३।३।१७५।

सर्व्वलकारापवादः।

स्मोत्तरे लङ् च। ३।३।१७६।

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ्।

च्लि लुङि। ३।१।४३।

शबाद्यपवादः।

च्लेः सिच्। ३।१।४४।

इचाविती।

गातिस्थाघुपाभूभ्यस्सिचः परस्मैपदेषु। २।४।७७।

लुक्। गा पा विहरणादेशपिबती गृह्येते॥

भूसुवोस्तिङि ७।३।८८

भू सू एतयो स्सार्वधातुके तिङि गुणो न। अभूत। अभूताम्। अभूवन्। अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम।

नमाङ्योगे। ६।४।७४।

अडाटौ न स्तः। मा भवान्भूत्। मा स्म भवत्। मा स्म भूत्॥

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३।३।१३९

हेतु हेतु मद्भावादि लिङ् निमित्त तत्र भविष्यत्यर्थे लृङ् क्रिया-यामनिष्पत्तौ गम्यमानायाम्। अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम। सुवृष्टिश्चेद भविष्यत् तदा सुभिक्षमभविष्यत्। इत्यादि ज्ञेयम्। अत सातत्यगमने। २। अतति॥

अत आदेः ७।४।७०।

अभ्यासस्यादेरतो दीर्घस्स्यात्। आत। आततुः। आतुः। आतिथ। आतथुः। आत। आत। आतिव। आतिम। अतिता। अतिष्यति। अततु।

आडजादीनाम्। ६।४। ७२

अजादेरङ् स्यात् लुङ् लङ् लृङ्क्षु। आतत्। आतेत्। आत्यात्। आत्यास्ताम्। लुङि सिचि इडागमे कृते॥

अस्ति सिचोऽपृक्ते। ७।३। ९६॥

विद्यमानात्सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः॥

इट ईटि। ८।२। २८॥

इटः परस्य सस्य लोपस्स्यादीटि। सिज्लोप एकादेशे सिद्धो वा-

स्यः। आतीत्। आतिष्टाम्॥

सिजभ्यस्तविदिभ्यश्च।३।४।१०९।

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस्। आतिषुः। आतीः। आतिष्टम्। आतिष्ट। आतिषम्। आतिष्व। आतिष्म। आतिष्यत्। षिधु गत्याम्॥ ३।

ह्रस्वं लघु।१।४।१०।

संयोगे गुरु।१।४।११।

संयोगे परे ह्रस्वं गुरु।

दीर्घं च।१।४।१२।

गुरु स्यात्॥

पुगन्तलघूपधस्य च।७।३।८६॥

पुगन्तस्य लघूपधस्य चाङ्गस्येको गुणः सार्वधातुकार्द्धधातुकयोः। धात्वादेरिति सः। सेधति। षत्वम्। सिषेध।

असंयोगाल्लिट् कित्।१।२।५।

असंयोगात्परोऽपिल्लिट् कित् स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः सिषिध। सिषेध। सिषिधिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्। एवम् चिती सञ्ज्ञाने। ४। शुच शोके। ५। गद व्यक्तायां वाचि। ६। गदति।

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च।८।४।१७॥

उपसर्गस्थान्निमित्तात्परस्य नेर्णो गदादिषु परेषु। प्रणिगदति

कुहोश्चुः।७।४।६२॥

अभ्यासकवर्गहकारयोश्चवर्गादेशः॥

अत उपधायाः। ७। २। ११६॥

उपधाया अतो वृद्धिः स्यात् ञ्णिति णिति च प्रत्यये। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद॥

णलुत्तमो वा। ७। १। ९१॥

णित् स्यात्। जगाद। जगद। जगदिव। जगदिम। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्॥

अतो हलादेर्लघोः। ७। २। ७॥

हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि। अगादीत्। अगदीत्। अगदिष्यत्। णद अव्यक्ते शब्दे॥ ७॥

णो नः। ६। १। ६५।

धात्वादेर्णस्य नः। णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्दनक्कनॄनृतः।

उपसर्गादसमासेऽपि णोपदेशस्य। ८। ४। १४।

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः। प्रणदति। प्रणिनदति। नदति। ननाद॥

अत एकहल्मध्येऽनादेशादेर्लिटि। ६। ४। १२०।

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात एत्वमभ्यासलोपश्च किति लिटि॥

थलि च सेटि। ६। ४। १२१।

प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्। अनदीत्। अनदिष्यत्। टुनदि समृद्धौ। ८॥

आदिर्ञिटुडवः। १। ३। ५।

उपदेशे धातोराद्या एते इतः स्युः॥

इदितो नुम् धातोः। ७। १। ५८॥

नन्दति। ननन्द। नन्दिता। नन्दिष्यति। नन्दतु। अनन्दत्। नन्देत्

नन्द्यात्। आनन्दीत्। आनन्दिष्यत्। अर्च पूजायाम्॥ ९॥ अर्चति।

तस्मान्नुड् द्विहलः॥ ७।४।७१॥

द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात्। आनर्च। आनर्चतुः। अर्चिता। अर्चिष्यति। अर्चतु। आर्चत्। अर्चेत्। अर्च्यात्। आर्चीत्। आर्चिष्यत्। व्रज गतौ॥ १०॥ व्रजति। वव्राज। व्रजिता। व्रजिष्यति। व्रजतु। अव्रजत्। व्रजेत्। व्रज्यात्॥

वदव्रजहलन्तस्याचः॥ ७।२।३॥

एषामचो वृद्धिः सिचि परस्मैपदेषु। अव्राजीत्। अव्रजिष्यत्। कटे वर्षावरणयोः॥ ११॥ कटति। चकाट। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्॥

ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्॥ ७।२।५॥

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि। अकटीत्। अकटिष्यत्। गुपू रक्षणे॥ १२॥

गुपूधूपविच्छिपणिपनिभ्य आयः॥ ३।१।२८॥

स्वार्थे॥

सनाद्यन्ता धातवः॥ ३।१।३२॥

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः। धातुत्वाल्लडादयः। गोपायति॥

आयादय आर्धधातुके वा॥ ३।१।३१॥

आर्धधातुकविवक्षायामायादयो वा स्युः। कास्यनेकाच आम् वक्तव्यः। लिटि। आस्कासोराम्विधानान्मस्य नेत्वम्॥

अतो लोपः॥ ६।४।४८॥

आर्धधातुकोपदेशे यददन्तं तस्यातो लोप आर्धधातुके॥

आमः॥ २।४।८१॥

आमः परस्य लुक्॥

कृञ् चानुप्रयुज्यते लिटि।३।१।४०।

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि॥

उरत्।७।४।६६॥

अभ्यास ऋवर्णस्यात्स्यात्। हलादि। गोपायाञ्चकार। द्वित्वात्परत्वाद्यणि प्राप्ते॥

द्विर्वचनेऽचि।१।१।५९।

द्वित्वनिमित्तेऽचि अच आदेशो न द्वित्वे कर्त्तव्ये। गोपायाञ्चक्रतुः

एकाच उपदेशेऽनुदात्तात्।७।२।१०।

उपदेशे यो धातुरेकाजनुदात्तश्च तत आर्द्धधातुकस्येण्न।

ऊदृदन्तैर्यौति रुक्ष्णु शीङ् स्नु नु क्षु श्विडीङ् श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः। कान्तेषु। शक्लृ एकः। चान्तेषु। पच् मुच् रिच् वच् विच् सिच् षट्। छान्तेषु। प्रच्छ् एकः। जान्तेषु त्यज् निज् भज् भञ्ज् भुज् भ्रस्ज् मस्ज् यज् युज् रुज् रञ्ज् विजि स्वञ्ज् सञ्ज् सृजः पञ्चदश। दान्तेषु। अद् क्षुद् खिद् छिद् तुद् नुद् पद्य भिद् विद्य विनद् विन्द् शद् सद् स्विद्य स्कन्दि हदः षोडश। धान्तेषु। क्रुध् क्षुध् बुध्य बन्ध् युध् रुध् राध् व्यध् शुध् साध् सिध्य एकादश। नान्तेषु। मन्य हनौ द्वौ। पान्तेषु। आप् क्षिप् छुप् तप् तिप् तृप्य दृप्य लिप् लुप् वप् शप् स्वप् सृप् त्रयोदश। भान्तेषु। यभ् रभ् लभस्त्रयः। मान्तेषु। गम् नम् यम् रमश्चत्वारः। शान्तेषु। क्रुश् दंश् दिश् दृश् मृश् रिश् रुश् लिश् विश् स्पृशो दश। षान्तेषु। कृष् त्विष् तुष् द्विष् दुष् पुष्य पिष् विष् शिष् शुष् श्लिष्य एकादश। सान्तेषु। घस् वसती द्वौ। हान्तेषु। दह् दिह् दुह् नह् मिह् रुह् लिह् वहोऽष्टौ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम्।

गोपायाञ्चकर्थ। गोपायाञ्चक्रथुः। गोपायाञ्चक्र। गोपायाञ्चकार। गोप-

याञ्चकृव। गोपायाञ्चकृम। गोपायाम्बभूव। गोपायामास। जुगोप। जुगुपतुः। जुगुपुः

स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४।

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्। जु-
गोपिथ। जुगोप्थ। गोपायिता। गोपिता। गोप्ता। गोपायिष्यति।
गोपिष्यति। गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्॥

नेटि ७।२।४॥

इडादौ सिचि हलन्तस्य वृद्धिर्न। अगोपायीत्। अगोपीत्। अगौ-
प्सीत्।

झलो झलि ८।२।२६॥

झलः परस्य सस्य लोपो झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अ-
गौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायि-
ष्यत्। अगोपिष्यत्। अगोप्स्यत्। क्षि क्षये। १३। क्षयति। चिक्षाय
। चिक्षियतुः। चिक्षियुः। एकाच इति निषेधे प्राप्ते॥

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३॥

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात्॥

अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१॥

उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण्न॥

उपदेशेऽत्वतः ७।२।६२॥

उपदेशेऽकारवान्यस्तासौ नित्यानिट् ततः परस्य थल इण्न
स्यात्॥

ऋतो भारद्वाजस्य ७।२।६३॥

तासौ नित्यानिट ऋदन्तादेव थलो नेड् भारद्वाजस्य मते। तेन
न्यन्यस्य स्यादेव। अयमत्र सङ्ग्रहः।

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम्।
ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड्भवेत्॥

चिक्षयिथ। चिक्षेथ। चिक्षियथुः। चिक्षिय। चिक्षाय। चिक्षय। चिक्षियिव। चिक्षियिम। क्षेता। क्षेष्यति। क्षयतु। अक्षयत्। क्षयेत्।

अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५

अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः। क्षीयात्॥

सिचि वृद्धिः परस्मैपदेषु ७।२।१।

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि। अक्षैषीत्। अक्षेष्यत्। तप सन्तापे। २४ तपति। तताप। तेपतुः। तेपुः। तेपिथ। ततप्थ। तप्ता। तप्स्यति। तपतु। अतपत्। तपेत्। तप्यात्। अताप्सीत्। अताप्ताम्। अतप्स्यत्॥ क्रमु पादविक्षेपे। २५

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७०

एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे। पक्षे शप्॥

क्रमः परस्मैपदेषु ७।३।७६।

क्रमो दीर्घः परस्मैपदे शिति। क्राम्यति। क्रामति। चक्राम। क्रमिता। क्रमिष्यति। क्राम्यतु। क्रामतु। अक्राम्यत्। अक्रामत्। क्राम्येत्। क्रामेत्। क्रम्यात्। अक्रमीत्। अक्रमिष्यत्। पा पाने। २६॥

पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८।

पादीनां धात्वादेशाः स्युरित्संज्ञकशकारादौ प्रत्यये। पिबादेशोऽदन्तस्तेन न गुणः। पिबति॥

आत औ णलः ७।१।३४॥

पपौ॥

आतो लोप इटि च ६।४।६४॥

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः। पपतुः।

पपुः। पपिथ। पपाथ। पपथुः। पप। पपौ। पपिव। पपिम। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्॥

एर्लिङि। ६।४।६७

घुसंज्ञकानां मास्थादीनाञ्च एत्वं स्यादार्द्धधातुके किति लिङि। पेयात्। गातिस्थेति सिचो लुक्। अपात्। अपाताम्॥

आतः। ३।४।११०॥

सिज्लुकि आदन्तादेव झेर्जुस्॥

उस्यपदान्तात्। ६।१।९६।

अपदान्तादकारादुसि पररूपमेकादेशः। अपुः। अपास्यत्। ग्लै हर्षक्षये। १७। ग्लायति॥

आदेच उपदेशेऽशिति। ६।१।४५।

उपदेशे एजन्तस्य धातोरात्वं न तु शिति। जग्लौ। ग्लाता। ग्लास्यति। ग्लायतु। अग्लायत्। ग्लायेत्॥

वाऽन्यस्य संयोगादेः। ६।४।६८

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्द्धधातुके किति लिङि। ग्लेयात्। ग्लायात्॥

यमरमनमातां सक् च। ७।२।७३॥

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु। अग्लासीत्। अग्लास्यत्। ह्वृ कौटिल्ये। १८। ह्वरति॥

ऋतश्च संयोगादेर्गुणः। ७।४।१०।

ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि। उपधाया वृद्धिः। जह्वार। जह्वरतुः। जह्वरुः। जह्वर्थ। जह्वरथुः। जह्वर। जह्वार। जह्वर। जह्वरिव। जह्वरिम। ह्वर्ता।

ऋद्धनोः स्ये। ७।२।७०।

ऋतो हन्तेश्च स्यस्येट्। ह्वरिष्यति। ह्वरतु। अह्वरत्। ह्वरेत्॥

गुणोऽर्त्ति संयोगाद्योः।७।४।२९।

अर्त्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्द्धधातुके लिङि च। ह्वर्य्यात्। अह्वार्षीत्। अह्वरिष्यत्। श्रु श्रवणे। १९।

श्रुवः शृ च। ३।१।७४।

श्रुवः शृ इत्यादेशः स्यात् श्नु प्रत्ययश्च। शृणोति।

सार्व्वधातुकमपित्।१।२।४।

अपित् सार्व्वधातुकं ङित्। शृणुतः।

हुश्नुवोः सार्व्वधातुके।६।४।८७।

हु श्नु वोरनेकाचोऽसंयोगपूर्व्वस्योवर्णस्य यण् स्यादचि सार्व्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि।

लोपश्चास्यान्यतरस्यां म्वोः।६।४।१०७।

असंयोगपूर्व्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः। शृणुवः। शृण्मः। शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोति। शृणुताम्। शृण्वन्तु॥

उतश्च प्रत्ययादसंयोगपूर्व्वात्।६।४।१०६।

असंयोगपूर्व्वात् प्रत्ययोतो हेर्लुक्। शृणु। शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व। अशृणुव। अशृण्म। अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्। गम्लृ गतौ। २०।

इषुगमियमां छः।७।३।७७।

एषां छः। इच्छति। गच्छति। जगाम॥

गमहनजनखनघसां लोपः क्ङित्यनङि । ६।४।९८ ॥
एषामुपधाया लोपोऽजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ । जगन्थ । जग्मथुः । जग्म । जगाम । जगम । जग्मिव । जग्मिम । गन्ता ।

गमेरिट् परस्मैपदेषु । ७।२।५८ ।

गमेः सादेरार्द्धधातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ।

पुषादिद्युताद्य्लृदितः परस्मैपदेषु । ३।१।५५

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् ।

॥ इति परस्मैपदिनः ॥

एध वृद्धौ । १ ।

टित आत्मनेपदानां टेरे । ३।४।७९ ।

टितो लस्यात्मनेपदानां टेरेत्वम् । एधते ।

आतो ङितः । ७।२।८१ ।

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ।

थासः से । ३।४।८० ।

टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ।

इजादेश्च गुरुमतोऽनृच्छः । ३।१।३६ ॥

इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ।

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य । १।३।६३ ।

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥

लिटस्तझयोरेशिरेच् । ३।४।८१ ।

लिडादेशयो स्तझयोरेशिरेचौ स्तः। एधाञ्चक्रे। एधाञ्चक्राते। एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे।

इणः षीध्वंलुङ्लिटां धोऽङ्गात्। ८।३।७८

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे।

धि च। ८।२।२५।

धादौ प्रत्यये सस्य लोपः। एधिताध्वे।

ह एति। ७।४।५२।

तासस्त्योस्सस्य हः स्यादेति परे। एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्यध्वे। एधिष्ये। एधिष्यावहे। एधिष्यामहे।

आमेतः। ३।४।९०।

लोट एत आम्। एधताम्। एधेताम्। एधन्ताम्।

सवाभ्यां वामौ। ३।४।९१।

सवाभ्यामुत्तरस्य लोडेतः क्रमाद् वामौ स्तः। एधस्व। एधेथाम्। एधध्वम्।

एत ऐ। ३।४।९३।

लोडुत्तमस्य। एधै। एधावहै। एधामहै। आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

लिङः सीयुट्। ३।४।१०२।

सलोपः। एधेत। एधेयाताम्।

झस्य रन्। ३।४।१०५।

लिङः। एधेरन्। एधेथाः। एधेयाथाम्। एधेध्वम्।

इटोऽत् ।३।४।१०६

लिङादेशस्य। एधेय। एधेवहि। एधेमहि।

सुट्तिथोः ।३।४।१०७।

लिङस्तथोस्सुट्। यलोपः। आर्द्धधातुकत्वात् सलोपो न। एधिषीष्ट। एधिषीयास्ताम्। एधिषीरन्। एधिषीष्ठाः। एधिषीयास्थाम्। एधिषीध्वम्। एधिषीय। एधिषीवहि। एधिषीमहि। ऐधिष्ट। ऐधिषाताम्।

आत्मनेपदेष्वनतः ।७।१।५।

अनकारात् परस्यात्मनेपदेषु झस्यात् स्यात्। ऐधिषत। ऐधिष्ठाः। ऐधिषाथाम्। ऐधिढ्वम्। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्यत। ऐधिष्येताम्। ऐधिष्यन्त। ऐधिष्यथाः। ऐधिष्येथाम्। ऐधिष्यध्वम्। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। कमु कान्तौ।२

कमेर्णिङ् ।३।१।३०।

स्वार्थे। ङित्त्वात् तङ्। कामयते।

अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५

णेरय्। कामयाञ्चक्रे। आयादय इति णिङ् वा। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिढ्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता। कामयितासे। कमिता। कामयिष्यते। कमिष्यते। कामयताम्। अकामयत। कामयेत। कामयिषीष्ट। कमिषीष्ट।

णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ् ।३।१।४८।

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि। कामि अ त इति स्थिते।

णेरनिटि ।६।४।५१।

अनिडादावार्द्धधातुके णेर्लोपः।

णौ चङ्युपधाया ह्रस्वः। ७।४।१।

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः।

चङि। ६।१।११।

अनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य।

सन्वल्लघुनि चङ्परेऽनग्लोपे। ७।४।९३।

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्य्यं स्यात् अग्लोपेऽसति।

सन्यतः। ७।४।७९।

अभ्यासस्यात इत् सनि।

दीर्घो लघोः। ७।४।९४।

लघोरभ्यासस्य दीर्घः सन्वद्भावविषये। अचीकमत। णिङभावपक्षे।

कमेश्च्लेश्चङ् वाच्यः। अचकमत। अकामयिष्यत। अकमिष्यत। अय गतौ ॥३॥ अयते।

उपसर्गस्यायतौ। ८।२।१९।

अयतावुपसर्गस्य रेफस्य लत्वम्। प्लायते। पलायते।

दयायासश्च। ३।१।३७।

एभ्य आम् लिटि। अयाञ्चक्रे। अयिता। अयिष्यते। अयताम्। आयत। अयेत। अयिषीष्ट।

विभाषेटः। ८।३।७९।

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः। अयिषीध्वम्। अयिषीढ्वम्। आयिष्ट। आयिध्वम्। आयिढ्वम्। आयिष्यत। द्युत दीप्तौ ॥४॥ द्योतते।

द्युतिस्वाप्योः सम्प्रसारणम्। ७।४।६७।

अनयोरभ्यासस्य सम्प्रसारणं स्यात्। दिद्युते।

द्युद्भ्यो लुङि। १।३।९१।

द्युतादिभ्यः परस्मैपदं वा लुङि। पुषादीत्यङ्। अद्युतत्। अ-द्योतिष्ट। अद्योतिष्यत। एवं श्विता वर्णे। ५। ञिमिदा स्नेहने। ६। ञिष्विदा स्नेहनमोचनयोः॥ ७। मोहनयोरित्येके। ञिक्ष्विदा चेत्येके। रुच दीप्तावभिप्रीतौ च। ८। घुट परिवर्तने। ९। शुभ दीप्तौ। १०। क्षुभ सञ्चलने। ११। णभ तुभ हिंसायाम्। १२। १३। स्रंसु भ्रंसु ध्वंसु अवस्रंसने।। १४। १५। १६। ध्वंसु गतौ। १७। स्रम्भु विश्वासे। १८। वृतु वर्तने। १९। वर्तते। ववृते। वर्तिता।

वृद्भ्यः स्यसनोः। १।३।९२।

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च।

न वृद्भ्यश्चतुर्भ्यः। ७।२।५९।

वृतु वृधु शृधु स्यन्दूभ्यः सकारादेरार्धधातुकस्येण्न तङानयोरभावे। वर्त्स्यति। वर्तिष्यते। वर्तताम्। अवर्तत। वर्तेत। वर्तिषीष्ट। अवर्तिष्ट। अवर्त्स्यत्। अवर्तिष्यत। दद दाने। २०। ददते।

न शसददवादिगुणानाम्। ६।४।१२६।

शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य ए-त्वाभ्यासलोपौ न। दददे। दददाते। दददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत। त्रपूष् लज्जायाम्। २१। त्रपते।

तॄफलभजत्रपश्च। ६।४।१२२।

एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च। त्रेपे। त्रपिता। त्रप्ता। त्रपिष्यते। त्रप्स्यते। त्रपताम्। अत्रपत। त्रपेत। त्रपिषीष्ट। त्रप्सीष्ट। अत्रपिष्ट। अत्रप्त। अत्रपिष्यत। अत्रप्स्यत।

इत्यात्मनेपदिनः॥

श्रिञ् सेवायाम्।१। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयिता।। श्रयिष्यति। श्रयिष्यते। श्रयतु। श्रयताम्। अश्रयत्। अश्रयत। श्रयेत्। श्रयेत। श्रीयात्। श्रयिषीष्ट। चङ्। अशिश्रियत्। अशिश्रियत। अश्रयिष्यत्। अश्रयिष्यत। भृञ् भरणे। २। भरति। भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभ्रिव। बभृम। बभ्रे। बभृषे। भर्तासि। भर्तासे। भरिष्यति। भरिष्यते। भरतु। भरताम्। अभरत्। अभरत। भरेत्। भरेत।

रिङ् शयग्लिङ्क्षु।७।४।२८।

शे यकि यादावार्द्धधातुके लिङि च ऋतो रिङ्। रीङि प्रकृते रिङ् विधानसामर्थ्याद् दीर्घो न। भ्रियात्।

उश्च।१।२।१२।

ऋवर्णान्तात् परो लिङ् सिचौ कितौ स्तस्तङि। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्।

ह्रस्वादङ्गात्।८।२।२७।

सिचो लोपो झलि। अभृत। अभरिष्यत्। अभरिष्यत। हृञ् हरणे। ३। हरति। हरते। जहार। जह्रे। जहर्थ। जह्रिव। जह्रिम। जह्रिषे। हर्ता। हरिष्यति। हरिष्यते। हरतु। हरताम्। अहरत्। अहरत। हरेत्। हरेत। ह्रियात्। हृषीष्ट। हृषीयास्ताम्। अहार्षीत्। अहृत। अहरिष्यत्। अहरिष्यत। धृञ् धारणे।४। धरति। धरते। णीञ् प्रापणे।५। नयति। नयते। डुपचष् पाके।६। पचति। पचते। पपाच। पेचिथ। पपक्थ। पेचे। पक्ता। भज सेवायाम्।७। भजति। भजते। बभाज। भेजे। भक्ता। भक्ष्यति। भक्ष्यते। अभाक्षीत्। अभक्त। अभक्षाताम्। यज देवपूजासङ्गतिकरणदानेषु।८। यजति। यजते।

लिट्यभ्यासस्योभयेषाम्।६।१।१७।

वच्यादीनां ह्वादीनाञ्च भ्यासस्य सम्प्रसारणं लिटि। इयाज।

वचिस्वपियजादीनां किति। ६।१।१५।

वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं किति। ईजतुः ईजुः। इयजिथ। इयष्ठ। ईजे। यष्टा।

षढोः कः सि। ८।२।४१॥

षस्य ढस्य च कः स्यात् सकारे परे। यक्ष्यति। यक्ष्यते। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट। वह प्रापणे। ४। वहति। वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ।

झषस्तथोर्धोऽधः। ८।२।४०।

झषः परयोस्तथोर्धः स्यान्न तु दधातेः।

ढो ढे लोपः। ८।३।१३।

सहिवहोरोदवर्णस्य। ६।३।११२।

ढलोपः। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि।

इति भ्वादयः॥

अदादयः॥

अद भक्षणे। १।

अदिप्रभृतिभ्यः शपः। २।४।७२।

लुक् स्यात्। अत्ति। अत्तः। अदन्ति। अत्सि। अत्थः। अत्थ। अद्मि। अद्वः। अद्मः।

लिट्यन्यतरस्याम्। २।४।४०।

अदो घस्लृ स्यात्। जघास। उपधालोपः। घस्य च त्वम्।

घसिभसोर्हलि च / शासिवसिघसीनाञ्च। ८।३।६०।

दूरा कुत्या मेषां सस्य षः। जक्षतुः। जक्षुः। जघसिथ। जक्षथुः। ज-
क्ष। जघास। जक्षिव। जक्षिम। आद। आदतुः। आदुः।

इडत्त्यर्त्ति व्ययतीनाम्। ७।२।६६।

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात्। आदिथ। अत्ता।
अत्स्यति। अत्तु। अत्तात्। अत्ताम्। अदन्तु।

हुझल्भ्यो हेर्धिः। ६।४।१०१।

अद्धि। अत्तात्। अत्तम्। अत्त। अदानि। अदाव। अदाम।

अदः सर्वेषाम्। ७।३।१००।

अदेः पृक्तसार्वधातुकस्याट् स्यात्। आदत्। आत्ताम्। आदन्।
आदः। आत्तम्। आत्त। आदम्। आद्व। आद्म। अद्यात्। अद्या-
ताम्। अद्युः। अद्यात्। अद्यास्ताम्। अद्यासुः।

लुङ्सनोर्घस्लृ। २।४।३७।

अदः। अद्ध। अघसत्। आत्स्यत्। हन हिंसागत्योः। २। हन्ति।

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो
झलि क्ङिति। ६।४।३७।

अनुनासिकान्तानामेषां लोपः क्ङिति। यमिरमिनमिगमि
हनिमन्यतयोऽनुदात्तोपदेशाः। तनु क्षणु क्षिणु ऋणु तृणु घृणु
वनु मनु तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः
। हन्मः। जघान। जघ्नतुः। जघ्नुः।

अभ्यासाच्च। ७।३।५५।

हन्तेर्हस्य कुत्वम्। जघनिथ। जघन्थ। जघ्नथुः। जघ्न। जघान। ज-
घन। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु। हतात्। हताम्। घ्नन्तु।

हन्तेर्जः। ६।४।३६।

जहि।

असिद्धवदत्राभात्। ६।४।२२।

इत ऊर्ध्वमापादसमाप्तेराभीयम्। समानाश्रये। तस्मिन् कर्त्तव्ये तदसिद्धम्। इति जस्यासिद्धत्वान्न हेर्लुक्। जहि। हतात्। हतम्। हत। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहन्। अहतम्। अहत। अहनम्। अहन्व। अहन्म। हन्यात्।

आर्द्धधातुके। २।४।३५।

इत्यधिकृत्य।

हनो वध लिङि। २।४।४२।

लुङि च। २।४।४३।

वध्यात्। वध्यास्ताम्। अवधीत्। अहनिष्यत्। युमिश्रणामिश्रणयोः। ३।

उतो वृद्धिर्लुकि हलि। ७।३।८९।

लुग्विषये उतो वृद्धिः पिति हलादौ सार्व्वधातुके न त्वभ्यस्तस्य। यौति। युतः। युवन्ति। यौषि। युथः। युथ। यौमि। युवः। युमः। युयाव। यविता। यविष्यति। यौतु। युतात्। अयौत्। अयुताम्। अयुवन्। युयात्। इह वृद्धिर्न भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात्। युयाताम्। युयुः। यूयात्। यूयास्ताम्। यूयासुः। अयावीत्। अयविष्यत्। या प्रापणे। ४। याति। यातः। यान्ति। ययौ। याता। यास्यति। यातु। अयात्। अयाताम्।

लङः शाकटायनस्यैव। ३।४।१११।

आदन्ताल्लङो झेर्जुस् वा। अयुः। अयान्। यायात्। यायाताम्। यायुः। यायात्। यायास्ताम्। यायासुः। अयासीत्। अयास्यत्। वा गतिगन्धनयोः। ५। भा दीप्तौ। ६। ष्णा शौचे। ७। श्रा पाके। ८। द्रा कुत्सायाङ्गतौ। ९। प्सा भक्षणे। १०। रा दाने। ११। ला आदाने। १२। दाप् लवने। १३। ख्या प्रकथने। १४। अयं सार्व्वधातुक एव प्रयोक्तव्यः। विद ज्ञाने। १५।

विदो लटो वा। ३।४।८३॥

वेत्तेर्लटः परस्मैपदानां णलादयो वा। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे। वेत्ति। वित्तः। विदन्ति।

उषविदजागृभ्योऽन्यतरस्याम्। ३।१।३८।

एभ्यो लिट्याम् वा। विदेरदन्तत्वप्रतिज्ञानादामि न गुणः। विदाञ्चकार। विवेद। वेदिता। वेदिष्यति।

विदाङ्कुर्वन्त्वित्यन्यतरस्याम्। ३।१।४१।

वेत्तेर्लोटि आम् गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च निपात्यते। पुरुषवचने न विवक्षिते। विदाङ्करोतु।

तनादिकृञ्भ्य उः। ३।१।७९॥

शपोऽपवादः।

अत उत् सार्वधातुके। ६।४।११०।

उप्रत्ययान्तस्य कृञोऽत उत् सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु। विदाङ्करवाणि। अवेत्। अवित्ताम्। अविदुः।

दश्च। ८। २। ७५

धातोर्दस्य पदान्तस्य सिपि रुर्वा। अवेः। अवेत्। विद्यात्। विद्यास्ताम्। अवेदीत्। अवेदिष्यत्। अस भुवि। २६। अस्ति।

श्नसोरल्लोपः। ६।४।१११।

श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति। स्तः। सन्ति। असि। स्थः। स्थ। अस्मि। स्वः। स्मः।

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। ८।३।८७

उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे। निष्यात्। प्रनिषन्ति। प्रादुष्षन्ति। यच्परः किम्। अभिस्तः।

अस्तेर्भूः। २।४।५२।

आर्द्धधातुके। बभूव। भविता। भविष्यति। अस्तु। स्तात्। स्ताम्। सन्तु।

घ्वसोरेद्धावभ्यासलोपश्च। ६।४।११९।

घोरस्ते श्चैत्वं स्याद्धौ अभ्यासलोपश्च। एधि। स्तात्। स्तम्। स्त। असानि। असाव। असाम। आसीत्। आस्ताम्। आसन्। स्यात्। स्याताम्। स्युः। भूयात्। अभूत्। अभविष्यत्। इण् गतौ। ९७ एति। इतः।

इणो यण्। ६।४।८१।

अजादौ प्रत्यये परे। यन्ति।

अभ्यासस्यासवर्णे। ६।४।७८।

इ उवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि। इयाय।

दीर्घ इणः किति। ७।४।६९।

इणोऽभ्यासस्य दीर्घः किति लिटि। ईयतुः। ईयुः। इययिथ। इयेथ। एता। एष्यति। एतु। ऐत्। ऐताम्। आयन्। इयात्। ईयात्।

एतेर्लिङि। ७।४।२४।

उपसर्गात् परस्य इणोऽणो ह्रस्व आर्द्धधातुके किति लिङि। निरियात्। उभयत आश्रयणे नान्तादिवत्। अभीयात्। अणः किम्। समेयात्।

इणो गा लुङि। २।४।४५।

गाति स्थेति सिचो लुक्। अगात्। ऐष्यत्। शीङ् स्वप्ने। १८।

शीङः सार्वधातुके गुणः। ७।४।२१।

शेते। शयाते।

शीङो रुट्। ७।१।६।

शीङो झादेशस्यातो रुट्। शेरते। शेषे। शयाथे। शेध्वे। शये। शेवहे। शेमहे। शिश्ये। शिश्याते। शिश्यिरे। शयिता। शयिष्यते।

पेताम्। ध्यायाताम्। धेरताम्। अध्येत। अध्यायाताम्। अध्येरन्। ध्यायी
त। ध्यायीयाताम्। ध्यायीरन्। ध्यायिषीष्ट। अध्यायिष्ट। अध्यायिष्यत
। इङ् अध्ययने। १९। इङिकावध्युपसर्गतो न व्यभिचरतः।
अधीते। अधीयाते। अधीयते।

गाङ् लिटि। २।४।४९।

इङः। अधिजगे। अध्येता। अध्येष्यते। अधीताम्। अधीयाता-
म्। अधीयताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै।
अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत।
अध्यैथाः। अध्यैयाथाम्। अध्यैध्वम्। अध्यैयि। अध्यैवहि।
अध्यैमहि। अधीयीत। अधीयीयाताम्। अधीयीरन्। अध्ये-
षीष्ट।

विभाषा लुङ्लृङोः। २।४।५०।

इङो गाङ्।

गाङ्कुटादिभ्योऽञ्णिन्ङित्। १।२।१।

गाङादेशात् कुटादिभ्यश्चाञ्णितः प्रत्यया ङितः स्युः।

घुमास्थागापाजहातिसां हलि। ६।४।६६।

एषामात ईत् स्याद्धलादौ क्ङिति आर्द्धधातुके। अध्यगीष्ट। अ-
ध्यैष्ट। अध्यगीष्यत। अध्यैष्यत। दुह प्रपूरणे। २०। दोग्धि। दुग्धः
। दुहन्ति। धोक्षि। दुग्धे। दुहाते। दुहते। धुक्षे। दुहाथे। धुग्ध्वे। दुहे
। दुह्वहे। दुह्महे। दुदोह। दुदुहे। दोग्धा। धोक्ष्यति। धोक्ष्यते। दो-
ग्धु। दुग्धात्। दुग्धाम्। दुहन्तु। दुग्धि। दुग्धात्। दुग्धम्। दुग्ध।
दोहानि। दुग्धाम्। दुहाताम्। दुहताम्। धुक्ष्व। दुहाथाम्। धु-
ग्ध्वम्। दोहै। दोहावहै। दोहामहै। अधोक्। अदुग्धाम्। अदुहन्
। अदोहम्। अदुग्ध। अदुहाताम्। अदुहत। अधुग्ध्वम्। दुह्या-
त्। दुहीत।

लिङ्सिचावात्मनेपदेषु ।१।२।११।

इक्समीपाद्धलः परौ लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ।

शल इगुपधादनिटः क्सः ।३।१।४५।

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः । अधुक्षत ।

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।७।३।७३।

एषां क्सस्य लुग्वा दन्त्ये तङि । अदुग्ध । अधुक्षत ।

क्सस्याचि ।७।३।७२।

अजादौ तङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः । अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम् । अधुक्षध्वम् । अधुक्षि । अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत । एवं दिह उपचये । २१ । लिह आस्वादने । २२ । लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह । लिलिहे । लेढासि । लेढासे । लेक्ष्यति । लेक्ष्यते । लेढु । लीढात् । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट् । अलेड् । अलिक्षत् । अलिक्षत । अलीढ । अलेक्ष्यत् । अलेक्ष्यत । ब्रूञ् व्यक्तायां वाचि । २३ ।

ब्रुवः पञ्चानामादित आहो ब्रुवः ।३।४।८४।

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥

आहस्थः ।८।२।३५।

झलि । चर्त्वम् । आत्थ । आहथुः ।

ब्रुव ईट् ।७।३।९३।

ब्रुवो हलादेः पित ईट् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ।

ब्रुवो वचिः ।२।४।५३।

आर्द्धधातुके। उवाच। ऊचतुः। ऊचुः। उवचिथ। उवक्थ। ऊचे। वक्ता। वक्ष्यति। वक्ष्यते। ब्रवीतु। ब्रूतात्। ब्रूताम्। ब्रुवन्तु। ब्रूहि। ब्रवाणि। ब्रूताम्। ब्रवै। अब्रवीत्। अब्रूत। ब्रूयात्। ब्रुवीत। उच्यात्। वक्षीष्ट।

अस्यतिवक्तिख्यातिभ्योऽङ्। ३।१।५२।

च्लेः।

वच उम्। ७।४।२०।

अङि परे। अवोचत्। अवक्ष्यत्। अवक्ष्यत।

चर्करीतञ्च। चर्करीतमिति यङ्लुगन्तन्तददादौ बोध्यम्। ऊर्णुञ् आच्छादने। २४।

ऊर्णोतेर्विभाषा। ७।३।९०।

वृद्धिर्हलादौ पिति सार्वधातुके। ऊर्णौति। ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते। ऊर्णोतेराम्नेति वाच्यम्।

नन्द्राः संयोगादयः। ६।१।३।

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति। नुशब्दस्य द्वित्वम्। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः।

विभाषोर्णोः। १।२।३।

इडादिप्रत्ययो ङिद्वा स्यात्। ऊर्णुनुविथ। ऊर्णुनविथ। ऊर्णुविता। ऊर्णविता। ऊर्णुविष्यति। ऊर्णविष्यति। ऊर्णौतु। ऊर्णोतु। ऊर्णवानि। ऊर्णवै।

गुणोऽपृक्ते। ७।३।९१।

ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके। और्णोत्। और्णोः। ऊर्णुयात्। ऊर्णुयाः। ऊर्णुवीत। ऊर्णूयात्। ऊर्णुविषीष्ट। ऊर्णविषीष्ट।

ऊर्णोतेर्विभाषा। ७।२।६।

दूडादौ परस्मैपदे सिचि वृद्धिः। पक्षे गुणः। और्णावीत्। और्णवीत्। और्णुवीत्। और्णाविष्टाम्। और्णविष्टाम्। और्णुविष्टाम्। और्णाविषुः। और्णविषुः। और्णाविष्यत्। और्णविष्यत्।

## इत्यदादयः॥

## जुहोत्यादयः॥

हु दानादनयोः॥ १॥

## जुहोत्यादिभ्यः श्लुः। २।४।७५।

शपः।

## श्लौ। ६।१।१०।

धातोर्द्वे स्तः। जुहोति। जुहुतः।

## अदभ्यस्तात्। ७।१।४।

झस्य। हुश्नुवो रिति यण्। जुह्वति।

## भीह्रीभृहुवां श्लुवच्च। ३।१।३९।

एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्य्यञ्च। जुहवाञ्चकार। जुहाव। होता। होष्यति। जुहोतु। जुहुतात्। जुहुताम्। जुह्वतु। जुहुधि। जुहवानि। अजुहोत्। अजुहुताम्।

## जुसि च। ७।३।८३।

इगन्ताङ्गस्य गुणोऽजादौ जुसि। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्। ञिभी भये। २। बिभेति।

## भियोऽन्यतरस्याम्। ६।४।११५।

इः स्याद्धलादौ क्ङिति सार्व्वधातुके। बिभितः। बिभीतः। बिभ्यति। बिभयाञ्चकार। बिभाय। भेता। भेष्यति। बिभेतु। बिभितात्। बिभीतात्। अबिभेत्। बिभियात्। बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्। ह्री लज्जायाम्। ३। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार। जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु। अजिह्रेत्।

जिह्रीयात्। ह्रीयात्। अंह्रे षीत्। अह्रे व्यत्। पृ पालन पूरणयोः॥४
अर्त्तिपिपर्त्योश्च॥७।४।७७।
अभ्यासस्य तु स्यात् श्लौ। पिपर्त्ति।
उदोष्ठ्यपूर्व्वस्य॥७।१।१०२।
अङ्गावयवौ ष्ठ्यपूर्व्वो य ऋत् तदन्त स्याङ्गस्य उः।
हलि च।८।२।७७।
रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि। पिपूर्त्तः। पिपुरति। पपार।
शृदृप्रांह्रस्वो वा।७।४।१२।
किति लिटि। पप्रतुः
ऋच्छत्यृताम्।७।४।११।
तौदादिक ऋच्छे र्ऋधातो ॠदन्तानाञ्च गुणो लिटि। पपरतुः। पपरुः।
वॄतो वा।७।२।३८।
इट् वृञ भ्यामॄदन्ताच्चेरो दीर्घो वास्यान्नतु लिटि। परीता। परिता। परीष्यति। परिष्यति। पिपर्त्तु। अपिपः। अपिपूर्त्ताम्। अपिपरुः। पिपूर्य्यात्। पूर्य्यात्। अपारीत्।
सिचि च परस्मैपदेषु।७।२।४०॥
अनेरो न दीर्घः। अपारिष्टाम्। अपरीष्यत्। अपरिष्यत्। ओहाक् त्यागे। ४। जहाति।
जहातेश्च।६।४।११६॥
इद्वा स्याद्धलादौ क्ङिति सार्व्वधातुके। जहितः।
ई हल्यघोः।६।४।११३।
श्नाभ्यस्तयोरात ईत् सार्व्वधातुके क्ङिति हलि। जहीतः।
श्नाभ्यस्तयोरातः।६।४।११२।

लोपः क्ङिति। जहति। जहौ। हाता। हास्यति। जहातु। जहितात्। ज-
हीतात्।

आ च हौ। ६।४।११७।

जहातेः। चादि दीतौ। जहाहि। जहिहि। जहीहि। अजहात्। अजहुः।

लोपो यि। ६।४।११८।

जहातेरा लोपो यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अ-
हासीत्। अहास्यत्। माङ् माने शब्दे च। ६।

भृञामित्। ७।४।७६।

भृञ् माङ् ओहाङ् एषामभ्यासस्येत् स्याच्छ्लौ। मिमीते। मिमाते।
मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासी-
ष्ट। अमास्त। अमास्यत। ओहाङ् गतौ। ७। जिहीते। जिहाते। जि-
हते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासी-
ष्ट। अहास्त। अहास्यत। डुभृञ् धारणपोषणयोः। ८। बिभर्ति।
बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार। बभार।
बभर्थ। बभृव। बिभराञ्चक्रे। बभ्रे। भर्ता। भरिष्यति। भरिष्यते।
बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः।
। बिभृयात्। बिभ्रीत। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभ-
रिष्यत्। अभरिष्यत। डुदाञ् दाने। ९। ददाति। दत्तः। ददति। द-
त्ते। ददाते। ददते। ददौ। ददे। दाता। दास्यति। दास्यते। ददा-
तु॥

दाधा घ्वदाप्। १।१।२०॥

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। घ्वसोरेत्वे
त्वम्। देहि। दत्तम्। अददात्। अदत्त। दद्यात्। ददीत। देयात्। दासी-
ष्ट। अदात्। अदाताम्। अदुः।

स्थाघ्वोरिच्च। १।२।१७।

अनयोरिदन्नादेशस्सिज्लुकिदात्मनेपदे। अदित। अदास्यत्। अदास्यत। डुधाञ् धारणपोषणयोः। १०। दधाति।

दधस्तथोश्च। ८।२।३८।

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् तथोस्स्ध्वोश्च परतः। धत्तः। दधति। दधासि। धत्थः। धत्ते। दधाते। दधते। धत्से। धद्ध्वे। धत्से धेह्वि वस्यामसत्लोपश्च। धेहि। अदधात्। अधत्त। दध्यात्। दधीत। धेयात्। धासीष्ट। अधात्। अधित। अधास्यत्। अधास्यत। णिजिर् शौचपोषणयोः। ११।

इर इत्संज्ञा वाच्या।

निजां त्रयाणां गुणः श्लौ। ७।४।७५।

निजविजविषामभ्यासस्य गुणः श्लौ। नेनेक्ति। नेनिक्तः। नेनिजति। नेनिक्ते। निनेज। निनिजे। नेक्ता। नेक्ष्यति। नेक्ष्यते। नेनेक्तु। नेनिग्धि।

नाभ्यस्तस्याचि पिति सार्वधातुके। ७।३।८७।

लघूपधगुणो न। नेनिजानि। नेनिजाम्। अनेनेक्। अनेनिक्ताम्। अनेनिजुः। अनेनिजम्। अनेनिक्त। नेनिज्यात्। निज्यात्। नेनिजीत। निक्षीष्ट॥

इरितो वा। ३।१।५७॥

इरितो धातोश्च्लेरङ् वा परस्मैपदेषु। अनिजत्। अनैक्षीत्। अनिक्त। अनेक्ष्यत्। अनेक्ष्यत।

॥इति जुहोत्यादयः॥

दिवादयः॥

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। १।

दिवादिभ्यः श्यन्। ३।१।६९।

शपोऽपवादः। हलि चेति दीर्घः। दीव्यति। दिदेव। देविता। देवि-

ष्यति। दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात्। अदेवीत्। अदेवि-ष्यत्। एवं षिवु तन्तुसन्ताने॥ २॥ नृती गात्रविक्षेपे। ३। नृत्यति। नन-र्त। नर्तिता।

सेऽसिचि कृतचृतच्छृदतृदनृतः। ७।२।५७।

एभ्यस्सिज्भिन्नस्य सादेरार्द्धधातुकस्येड्वा। नर्तिष्यति। नर्त्स्यति। नृत्यतु। अनृत्यत्। नृत्येत्। नृत्यात्। अनर्तीत्। अनर्तिष्यत्। अनर्त्स्यत्। त्रसी उद्वेगे। ४। वा भ्राशेति श्यन् वा। त्रस्यति। त्रसति। तत्रास।

वा जृभ्रमुत्रसाम्। ६।४।१२४।

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा। त्रेसतुः। तत्रसतुः। त्रेसिथ। तत्रसिथ। त्रसिता। शो तनूकरणे। ५।

ओतः श्यनि। ७।३।७१।

लोपः स्यात् श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शशुः। शाता। शास्यति।

विभाषा घ्राधेट्शाच्छासः। २।४।७८।

एभ्यस्सिचो लुग्वा परस्मैपदेषु। अशात्। अशाताम्। अशुः।

यमरमनमातां सक् च। ७।२।७३।

एषां सगेभ्यस्सिच इट् परस्मैपदेषु। इट्सकौ। अशासीत्। अशासिषाम्। छो छेदने। ६। छ्यति। षो अन्तकर्मणि। ७। स्यति। ससौ। दो अवखण्डने। ८। द्यति। ददौ। देयात्। अदात्। व्यध ताडने। ९।

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च। ६।१।१६।

एषां सम्प्रसारणं स्यात् किति ङिति च। विध्यति। विव्याध। विविधतुः। विविधुः। विव्यधिथ। विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्। पुष पुष्टौ। १०। पुष्यति। पुपोष। पुपोषिथ।

पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत्। शुष शोषणे। ११। शुष्यति। शुशोष। अशुषत्। णश अदर्शने। १२। नश्यति। ननाश। नेशतुः।

रधादिभ्यश्च।७।२।४५।

वलाद्यार्द्धधातुकस्य वेट्। नेशिथ।

मस्जिनशोर्झलि।७।१।६०।

नुम्। ननंष्ठ। नेशिव। नेशिम। नशिता। नंष्टा। नशिष्यति। नङ्क्ष्यति। नश्यतु। अनश्यत्। नश्येत्। नश्यात्। अनशत्। षूङ् प्राणिप्रसवे। १३। सूयते। सुषुवे। क्रादिनियमादिट्। सुषुविषे। सुषुविवहे। सुषुविमहे। सोता। सविता। दूङ् परितापे। १४। दूयते। दीङ् क्षये। १५। दीयते।

दीङो युडचि क्ङिति।६।४।६३।

दीङः परस्याजादेः क्ङित आर्द्धधातुकस्य युट्।

वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ। दिदीये।

मीनातिमिनोतिदीङां ल्यपि च।६।१।५०।

एषामात्वं ल्यपि। चादशित्येजनिमित्ते। दाता। दास्यति। अदास्त। डीङ् विहायसा गतौ। १६। डीयते। डिड्ये। डयिता। पीङ् पाने। १७। पीयते। पेता। अपेष्ट। माङ् माने। १८। मायते। ममे। जनी प्रादुर्भावे। १९।

ज्ञाजनोर्जा।७।३।७९।

शिति। जायते। जज्ञे। जनिता। जनिष्यते।

दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्।३।१।६१।

एभ्यश्च्लेश्चिण् वा एकवचने तशब्दे परे।

चिणो लुक्।६।४।१०४।

चिणः परस्य लुक्।

नपुंसकादन्यतरस्याम्।५।४।१०९।

अन्नन्तं यत्क्लीबन्तदन्तादव्ययीभावाट्टज्वा। उपचर्म्मम्। उपचर्म्म।

झयः।५।४।१११।

झयन्तादव्ययीभावाट्टज्वा। उपसमिधम्। उपसमित्

इत्यव्ययीभावः॥

तत्पुरुषः।

तत्पुरुषः।२।१।२२।

अधिकारोऽयम्। प्राग्बहुव्रीहेः।

द्विगुश्च।२।१।२३।

तत्पुरुषसञ्ज्ञकः।

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः।२।१।२४

द्वितीयान्तं श्रितादिप्रकृतिकैस्सुबन्तैस्सह वा समस्यते। कृष्णं श्रितः। कृष्णश्रितः। इत्यादि।

तृतीया तत्कृतार्थेन गुणवचनेन।२।१।३०।

तृतीयान्तन्तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः। शङ्कुलाखण्डः। धान्येनार्थः। धान्यार्थः। तत्कृतेति किम्। अक्ष्णा काणः।

कर्त्तृकरणे कृता बहुलम्।२।१।३२।

कर्त्तरि करणे च तृतीया कृदन्तेन बहुलम् प्राग्वत्। हरित्रातः। नखभिन्नः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। नखनिर्भिन्नः।

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः।२।१।३६।

चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु। यूपदारु। तदर्थेन प्रकृतिविकृतिभाव

स्वेदः। तेनेह न। रन्धनाय स्थाली।

अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्। द्विजाया यम्। द्विजार्थ सूपः। द्विजार्था यवागूः। द्विजार्थम्पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्।

पञ्चमीभयेन। २।१।३७।

चोराद्भयम्। चोरभयम्।

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन। २।१।३९।

पञ्चम्याः स्तोकादिभ्यः। ६।३।२।

अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्यासादागतः। दूरादागतः। कृच्छ्रादागतः।

षष्ठी। २।२।८

सुबन्तेन प्राग्वत्। राजपुरुषः।

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे। २।२।१।

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसङ्ख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्। पूर्वं छात्राणाम्।

अर्द्धं नपुंसकम्। २।२।२।

समांशवाच्यर्द्धशब्दो नित्यं क्लीबे प्राग्वत्। अर्द्धं पिप्पल्या अर्द्धपिप्पली।

सप्तमी शौण्डैः। २।१।४०।

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्डः इत्यादि। द्वितीया तृतीयेत्यादियोगविभागादन्यत्रापि द्वितीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः।

दिक्सङ्ख्ये सञ्ज्ञायाम्। २।१।५०।

सञ्ज्ञायामेवेति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्-

पयः। सप्तर्षयः। तेनेदम्। उत्तरा वृक्षाः। पञ्च ब्राह्मणाः।

तद्धितार्थोत्तरपदसमाहारे च। २।१।५१।

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत्। पूर्वस्यां शालायां भवः पूर्वा शाला इति समासे जाते। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः।

दिक्पूर्वपदादसञ्ज्ञायां ञः। ४।२।१०७

अस्माद्भवाद्यर्थे ञः स्यादसञ्ज्ञायाम्।

तद्धितेष्वचामादेः। ७।२।११७।

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ। द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्।

गोरतद्धितलुकि। ५।४।९२।

गोऽन्तात् तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि। पञ्चगवधनः।

तत्पुरुषः समानाधिकरणः कर्मधारयः। १।२।४२।

सङ्ख्यापूर्वो द्विगुः। २।१।५२।

तद्धितार्थेत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसञ्ज्ञः स्यात्।

द्विगुरेकवचनम्। २।४।१।।

द्विग्वर्थः समाहार एकवत् स्यात्।

स नपुंसकम्। २।४।१७।

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। पञ्चानां गवां समाहारः पञ्चगवम्।

विशेषणं विशेष्येण बहुलम्। २।१।५७।

भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात् क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न।

रामो जामदग्न्यः।

उपमानानि सामान्यवचनैः। २।१।५५।

घनश्यामः।

शाकपार्थिवादीनामुत्तरपदलोपो वक्तव्यः। शाकप्रियः पार्थिवः। शाकपार्थिवः। देवब्राह्मणः।

नञ्। २।२।६।

नञ् सुपा प्राग्वत्।

नलोपो नञः। ६।३।७३।

नञो नस्य लोप उत्तरपदे। अब्राह्मणः।

तस्मान्नुडचि। ६।३।७४।

लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट्। अनश्वः। नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः।

कुगतिप्रादयः। २।२।१८।

एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः।

ऊर्यादिच्विडाचश्च। १।४।६१।

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसञ्ज्ञास्स्युः। ऊरीकृत्य। शुक्लीकृत्य। पटपटाकृत्य। सुपुरुषः।

प्रादयो गताद्यर्थे प्रथमया। प्रगत आचार्यः प्राचार्यः।

अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तो मालामतिमालः।

एकविभक्ति चापूर्वनिपाते। १।२।४४।

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं न तु तस्य पूर्वनिपातः।

गोस्त्रियोरुपसर्जनस्य। १।२।४८।

उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः। अतिमालः।

अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया। अवकोकिलः।
पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानोऽध्ययनाय पर्य्यध्ययनः।
निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः।

तत्रोपपदं सप्तमीस्थम्। ३।१।९२।

सप्तम्यन्ते पदे कर्म्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकम्पदमुपपदं स्यात्।

उपपदमतिङ्। २।२।१९।

उपपदं समर्त्थेन नित्यं समस्यते ऽतिङन्तश्चायं समासः। कुम्भङ्करोतीति कुम्भकारः। अतिङ् किम्। मा भवान् भूत्। माङि लुङीति सप्तमीनिर्द्देशान्माङुपपदम्। गतिकारकोपपदानां कृद्भिस्सह समासवचनम्प्राक् सुबुत्पत्तेः। व्याघ्री। अश्वक्रीती। कच्छपी। इत्यादि।

तत्पुरुषस्याङ्गुलेस्सङ्ख्याव्ययादेः। ५।४।८६।

सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्। निर्गतमङ्गुलिभ्यो निरङ्गुलम्।

अहस्सर्व्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः। ५।४।८७।।

एभ्यो रात्रेरच् स्यात्। चात्सङ्ख्याव्ययादेः। अहर्ग्रहणन्द्वन्द्वार्त्थम्।

रात्राह्नाहाः पुंसि। २।४।२९।

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अहश्च रात्रिश्चाहोरात्रः। सर्व्वरात्रः। सङ्ख्यातरात्रः।
सङ्ख्यापूर्व्वं रात्रं क्लीबम्। द्विरात्रम्। त्रिरात्रम्।

राजाहस्सखिभ्यष्टच्। ५।४।९१।

अदन्तात् तत्पुरुषाट्टच् । परमराजः ॥

**आन्महतः समानाधिकरणजातीययोः ॥ ६।३।४६ ॥**

महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥ ६।३।४७**

आत् स्यात् । द्वादश । अष्टाविंशतिः ॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ॥ २।४।२६ ॥**

कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपिप्पली ॥

द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु न । पञ्चकपालः पुरोडाशः ।

प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै अलङ्कुमारिः । अत एव ज्ञापकात् समासः । निष्कौशाम्बिः ॥

**अर्द्धर्चाः पुंसि च ॥ २।४।३१ ॥**

अर्द्धर्चादयः पुंसि क्लीबे च स्युः । अर्द्धर्चः । अर्द्धर्चम् । एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशकलशपात्रसूत्रादयः ।

सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ।

**इति तत्पुरुषः ॥**

**बहुव्रीहिः ॥**

**शेषो बहुव्रीहिः ॥ २।२।२३ ।**

अधिकारोऽयम् । प्राग्द्वन्द्वात् ।

**अनेकमन्यपदार्थे ॥ २।२।२४ ॥**

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्त्तमानं वा समस्यते स बहुव्रीहिः ॥

**सप्तमीविशेषणे बहुव्रीहौ ॥ २।२।३५ ॥**

सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं स्यात् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ।

**हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ६।३।९ ॥**

हलन्ताददन्तात्सप्तम्या अलुक्। त्वचिसारः। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः।

प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः। प्रपतितपर्णः प्रपर्णः।

नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः। अविद्यमानपुत्रोऽपुत्रः।

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु। ६।३।३४।

उक्तपुंस्कादनूङ् ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं समानाधिकरणे न तु पूरण्यां प्रियादौ च। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ् किम्। वामोरूभार्यः।

अप् पूरणीप्रमाण्योः। ५।४।११६।

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्। कल्याणीप्रियः। इत्यादि।

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्। ५।४।११३।

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच्। दीर्घसक्थः। जलजाक्षी। स्वाङ्गात् किम्। दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच्।

द्वित्रिभ्यां ष मूर्ध्नः। ५।४।११५।

द्विमूर्धः। त्रिमूर्धः।

अन्तर्बहिर्भ्यां च लोम्नः। ५।४।११७।

अप् स्यात्। अन्तर्लोमः। वहिर्लोमः।

पादस्य लोपोऽहस्त्यादिभ्यः। ५।४।१३८

हस्त्यादिवर्ज्जितादुपमानात् परस्य पादस्य लोपः। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्। हस्तिपादः। कुशूलपादः।

सङ्ख्यासुपूर्व्वस्य। ५।४।१४०।

लोप स्स्यात्। द्विपात्। सुपात्।

उद्विभ्यां काकुदस्य। ५।४।१४८।

लोप स्स्यात्। उत्काकुत्। विकाकुत्।

पूर्णाद्विभाषा। ५।४।१४९।

पूर्णकाकुत्। पूर्णकाकुदः।

सुहृद्दुर्हृदौ मित्रामित्रयोः। ५।४।१५०।

सुहृन्मित्रम्। दुर्हृदमित्रः।

उरःप्रभृतिभ्यः कप्। ५।४।१५१

कस्कादिषु च। ८।३।४८।

आच्यरिण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः। इति सः। व्यूढोरस्कः। प्रियसर्प्पिष्कः।

निष्ठा। २।२।३६।

निष्ठान्तं बहुव्रीहौ पूर्व्वं स्यात्। युक्तयोगः।

शेषाद्विभाषा। ५।४।१५४।

अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा। महायशस्कः। महायशाः।

इति बहुव्रीहिः।

द्वन्द्वः।

चार्थे द्वन्द्वः। २।२।२९।

अनेकं सुबन्तं च्चार्थे वर्त्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः। भिक्षामट गां चानयेत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः। अनयोरसामर्थ्यान्न समासः। धवखदिरौ छिन्धीति मिलितानामन्वय इतरेतरयोगः। सञ्ज्ञापरिभाषमिति समूहस्समाहारः।

## राजदन्तादिषु परम्। २। २। ३१॥

एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः। धर्मादिष्वनियमः। अर्थधर्मौ। धर्मार्थौ। इत्यादि।

## द्वन्द्वे घि। २। २। ३२।

पूर्वं स्यात्। हरिहरौ।

## अजाद्यदन्तम्। २। २। ३३।

ईशकृष्णौ।

## अल्पाच्तरम्। २। २। ३४।

शिवकेशवौ।

## पिता मात्रा। १। २। ७०।

मात्रा सहोक्तौ पिता वा शिष्यते। पितरौ। मातापितरौ।

## द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्। २। ४। २।

एषां द्वन्द्व एकवत्। पाणिपादम्। मार्दङ्गिकपाणविकम्। रथिकाश्वारोहम्।

## द्वन्द्वाच्चुदषहान्तात्समाहारे। ५। ४। १०६॥

चवर्गान्तात् दषहान्ताच्च द्वन्द्वाट्टच् स्यात् समाहारे। वाक् त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्। प्रावृट् शरदौ।

इति द्वन्द्वः ॥

समासान्ताः ॥

ऋक्पूरब्धूःपथामानक्षे । ५।४।७४

ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या धूस्तदन्तस्य न । अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु । अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ।

अक्ष्णोऽदर्शनात् । ५।४।७६

अचक्षुःपर्यायादक्ष्णोऽच् स्यात् । गवामक्षीव गवाक्षः ।

उपसर्गादध्वनः । ५।४।८५

प्रगतोऽध्वानम् प्राध्वो रथः ।

न पूजनात् । ५।४।६९

पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ।

इति समासान्ताः ॥

तद्धिताः ॥

समर्थानां प्रथमाद्वा । ४।१।८२

इदमधिक्रियते । प्राग्दिश इति यावत् ।

अश्वपत्यादिभ्यश्च । ४।१।८४

एभ्योऽण् स्यात् प्राग्दीव्यतीयेष्वर्थेषु ।

तद्धितेष्वचामादेः । ७।२।११७

ञिति णिति च तद्धिते परेऽचामादेरचो वृद्धिः स्यात् । अश्वपतेरपत्यादि । आश्वपतम् । गाणपतम् ।

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । ४।१।८५ ॥

प्राग्दीव्यतीयेष्वर्थेषु । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा आदित्यः । प्राजापत्यः

देवाद्यञञौ । दैव्यम् । दैवम् ।

बहिषष्टिलोपो यञ् च। बाह्यः। ईकक् च।

किति च। ७।२।११८॥

अचामादेरचो वृद्धिस्स्यात्। बाहीकः।
गोरजादिप्रसङ्गे यत्। गोरपत्यादि। गव्यम्।

उत्सादिभ्योऽञ्। ४।१।८६।

औत्सः। इत्यपत्यादिविकारान्तार्थाः प्रत्ययाः।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्। ४।१।८७।

धान्यानां भवन इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः। स्त्रैणः। पौंस्नः।

तस्यापत्यम्। ४।१।९२।

षष्ठ्यन्तात् कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः।

ओर्गुणः। ६।४।१४६।

उवर्णान्तस्य भस्य गुणस्तद्धिते। उपगोरपत्यमौपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

अपत्यं पौत्रप्रभृति गोत्रम्। ४।१।१६२।

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्।

एको गोत्रे। ४।१।९३॥

प्रत्ययः स्यात्। उपगोर्गोत्रापत्यमौपगवः।

गर्गादिभ्यो यञ्। ४।१।१०५।

गोत्रापत्ये। गर्गस्य गोत्रापत्यं गार्ग्यः। वात्स्यः।

यञञोश्च। २।४।६४।

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः।

जीवति तु वंश्ये युवा। ४।१।१६३।

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञं-

मेव स्यात्।

गोत्राद्यून्यस्त्रियाम्।४।१।९४।

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययस्स्यात् स्त्रियान्तु न युवसञ्ज्ञा।

यञिञोश्च।४।१।१०१।

गोत्रे यौ यञिञौ तदन्तान्नफक्।

आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्।

७।१।२।

प्रत्ययादेः फस्य आयन् ढस्यैय् खस्य ईन् छस्य ईय् घस्य इय् एते स्युः। गार्ग्यस्य युवापत्यं गार्ग्यायणः। दाक्षायणः।

अत इञ्।४।१।९५।

अपत्येऽर्थे। दाक्षिः।

बाह्वादिभ्यश्च।४।१।९६।

बाहविः। औडुलोमिः। आकृतिगणोऽयम्।

अनृष्यानन्तर्य्ये बिदादिभ्योऽञ्।४।१।१०४।

ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। बिदस्य गोत्रं बैदः। बैदौ। बिदाः। पुत्रस्यापत्यम्पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः।

शिवादिभ्योऽण्।४।१।११२।

अपत्ये। शैवः। गाङ्गः।

ऋष्यन्धकवृष्णिकुरुभ्यश्च।४।१।११४।

ऋषिभ्यः। वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः। श्वाफल्कः। वृष्णिभ्यः। वासुदेवः। कुरुभ्यः। नाकुलः। साहदेवः।

मातुरुत् सङ्ख्यासम्भद्रपूर्व्वायाः।४।१।११५।

सङ्ख्यादिपूर्व्वस्य मातृशब्दस्य उदादेशस्स्यादण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। साम्मातुरः। भाद्रमातुरः।

स्त्रीभ्यो ढक्।४।१।१२०।

स्त्री प्रत्ययान्तेभ्यो ढक्। वैनतेयः।

कन्यायाः कनीन च।४।१।११६।

चादण्। कानीनो व्यासः कर्णश्च।

राजश्वशुराद्यत्।४।१।१३७।

राज्ञो जाता वेव।

ये चाभाव कर्म्मणोः।६।४।१६८

यादौ तद्धिते ऽन् प्रकृत्या स्यान्न तु भाव कर्म्मणोः। राजन्यः।जातावेवेति किम्।

अन्।६।४।१६७।।

अन् प्रकृत्यारिंग परे। राजनः श्वशुर्य्यः

क्षत्त्राद्घः।४।१।१३८।

क्षत्रियः जाता वित्येव। क्षात्त्रिरन्यः।

रेवत्यादिभ्यष्ठक्।४।१।१४६

ठस्येकः।७।३।५०।

अङ्गात्परस्य ठस्येका देशः। रैवतिकः।

जनपद शब्दात् क्षत्त्रियादञ्।४।१।१६८

जनपद क्षत्त्रिय वाचकाच्छब्दादञपत्ये। पाञ्चालः।

क्षत्त्रियसमान शब्दाज्जनपदात् तस्य राजन्यपत्यवत्। पञ्चालानां राजा पाञ्चालः।

पुरोरण्। पौरवः।

पाराड्डोर्ड्यण्। पाराड्यः।

कुर्वादिभ्योण्यः।४।१।१७२

कौरव्यः। नैषध्यः।

तेनद्राजाः।४।१।१७४।

अञादय स्तद्राज संज्ञास्स्युः।

तद्राजस्य बहुषु तेनैवास्त्रियाम्।२।४।६२

बहुष्वर्थेषु तद्राजस्य लुक् तत्कृते बहुत्वेन तु स्त्रियाम्। पञ्चालाः इत्यादि।

कम्बोजाल्लुक्।४।१।१७५

अस्मात् तद्राजस्य लुक्। कम्बोजः कम्बोजौ।

कम्बोजादिभ्य इति वक्तव्यम्। चोलः शकः केरलः यवनः।

इत्यपत्याधिकारः॥

तेन रक्तं रागात्।४।२।१।

अण् स्यात्। कषायेण रक्तं वस्त्रं काषायम्।

नक्षत्रेण युक्तः कालः।४।२।३।

अण् स्यात्।

तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्। पुष्येण युक्तम्पौषमहः।

लुबविशेषे।४।२।४।

पूर्वेण विहितस्य लुप् षष्टि दण्डात्मकस्य कालस्यावान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः।

दृष्टं साम।४।२।७।

तेनेत्येव। वसिष्ठेन दृष्टं वासिष्ठं साम।

वामदेवाड्ड्यड्ड्यौ।४।२।९।

वामदेवेन दृष्टं साम वामदेव्यम्।

परिवृतो रथः।४।२।१०॥

अस्मिन्नर्थेऽण् प्रत्ययो भवति। वस्त्रेण परिवृतो वास्त्रो रथः।

तत्रोद्धृतममत्रेभ्यः।४।२।१४।

शरावे उद्धृत श्शाराव ओदनः।

संस्कृतम्भक्षाः।४।२।१६।

सप्तम्यन्तादण् स्यात् संस्कृतेऽर्थे यत् संस्कृतम्भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः।

साऽस्य देवता।४।२।२४।

इन्द्रो देवताऽस्येति ऐन्द्रं हविः। पाशुपतम्। बार्हस्पत्यम्।

शुक्राद्घन्।४।२।२६।

शुक्रियम्।

सोमाट्ट्यण्।४।२।३०।

सौम्यम्।

वाय्वृतुपित्रुषसो यत्।४।२।३१।

वायव्यम्। ऋतव्यम्।

रीङ् ऋतः।७।४।२७।

अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परे ऋतो रीङादेशः। यस्येति च। पित्र्यम्। उषस्यम्।

पितृव्यमातुलमातामहपितामहाः।४।२।३६॥

एते निपात्यन्ते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः। मातुः पिता मातामहः। पितुः पिता पितामहः।

तस्य समूहः।४।२।३७।

काकानां समूहः काकम्।

भिक्षादिभ्योऽण्।४।२।३८।

भैक्षम्। गार्भिणीनां समूहो गार्भिणम्। इह भस्याढे तद्धित इति पुंवद्भावे कृते।

इनण्यनपत्ये।६।४।१६४।

अनपत्यार्थेऽणि इन् प्रकृत्या। तेन नस्तद्धित इति टिलोपो न। युवतीनां समूहो यौवतम्।

ग्रामजनबन्धुभ्यस्तल्। ४।२।४३।
तलन्तं स्त्रियाम्। ग्रामता। जनता। बन्धुता।
गजसहायाभ्यां चेति वक्तव्यम्। गजता। सहायता।
अह्नः खः क्रतौ। अहीनः।

अचित्तहस्तिधेनोष्ठक्। ४।२।४७।

इसुसुक्तान्तात्कः। ७।३।५१।
इस् उस् उक् तान्तात् परस्य ठस्य कः। साक्तुकम्। हास्तिकम्।
धैनुकम्।

तदधीते तद्वेद। ४।२।५९।

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्। ७।३।३।
पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किन्तु ताभ्यांपूर्वौ क्रमादैचौ वा गमौस्तः। व्याकरणमधीते वेद वा वैयाकरणः।

क्रमादिभ्यो वुन्। ४।२।६१।
क्रमकः। पदकः। शिक्षकः। मीमांसकः।

तदस्मिन्नस्तीति देशे तन्नाम्नि। ४।२।६७।
उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरो देशः।

तेन निर्वृत्तम्। ४।२।६८।
कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी।

तस्य निवासः। ४।२।६९।
शिबीनां निवासो देशः शैबः।

अदूरभवश्च। ४।२।७०।
विदिशाया अदूरभवं वैदिशम्।

जनपदे लुप्। ४।२।८१।
जनपदे वाच्ये चातुरर्थिकस्य लुप्।

लुपि युक्तवद्व्यक्तिवचने । १।२।५१

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ।

वरणादिभ्यश्च । ४।२।८२

अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ।

कुमुदनडवेतसेभ्यो ड्मतुप् । ४।२।८७

झयः । ८।२।१०

झयन्तान्मतोर्मस्य वः । कुमुद्वान् । नड्वान् ।

मादुपधायाश्च मतोर्वोऽयवादिभ्यः । ८।२।९॥

मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ।

नडशादाड्ड्वलच् । ४।२।८८

नड्वलः ।

शिखाया वलच् । ४।२।८९

शिखावलः ॥

इति चातुरर्थिकाः ॥

शेषे । ४।२।९२

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्यते चातुरं शकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । तस्य विकार इत्यतः प्राक् शेषाधिकारः ।

राष्ट्रावारपाराद्घखौ । ४।२।९३॥

राष्ट्रे जातादी राष्ट्रियः । अवारपारीणः ।

अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । अवारीणः

पारीणः। पारावारीणः। इह प्रकृतिविशेषाद् घादयष्ट्युलन्ता उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते।

ग्रामाद्यखञौ। ४। २। ९४॥

ग्राम्यः। ग्रामीणः।

नद्यादिभ्यो ढक्। ४। २। ९७।

नादेयम्। माहेयम्। वाराणसेयम्।

दक्षिणापश्चात्पुरसस्त्यक्। ४। २। ९८

दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः।

द्युप्रागपागुदक्प्रतीचो यत्। ४। २। १०१

दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्।

अव्ययात्त्यप्। ४। २। १०४।

अमेहक्वतसित्रेभ्य एव। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः।

त्यब्नेर्ध्रुवे। नित्यः।

वृद्धिर्यस्याचामादिस्तद्वृद्धम्। १। १। ७३।

यस्य समुदायस्याचां मध्ये आदिर्वृद्धिस्तद् वृद्धसञ्ज्ञं स्यात्।

त्यदादीनि च। १। १। ७४।

वृद्धसञ्ज्ञानि स्युः।

वृद्धाच्छः। ४। २। ११४।

शालीयः। तदीयः।

वा नामधेयस्य वृद्धसञ्ज्ञा। देवदत्तीयः। दैवदत्तः।

गहादिभ्यश्च। ४। २। १३८।

गहीयः।

युष्मदस्मदोरन्यतरस्यां खञ् च। ४। ३। १।

चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वायं यौष्मदीयः। आस्मदीयः।

**तस्मिन्नणि च युष्माकास्माकौ।४।३।२।**

युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः।

**तवकममकावेकवचने।४।३।३।**

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। छे तु

**प्रत्ययोत्तरपदयोश्च।७।२।९८।**

मपर्यन्तयोरनयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः। त्वदीयः। मदीयः। त्वत्पुत्रः। मत्पुत्रः।

**मध्यान्मः।४।३।८।**

मध्यमः।

**कालाट्ठञ्।४।३।११।**

कालिकम्। मासिकम्। सांवत्सरिकम्।

अव्ययानां भमात्रे टिलोपः। सायंप्रातिकः। पौनःपुनिकः।

**प्रावृष एण्यः।४।३।१७।**

प्रावृषेण्यः।

**सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च।४।३।२३।**

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च। सायन्तनम्। चिरन्तनम्। प्राह्णेप्रगेऽनयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्।

**तत्र जातः।४।३।२५।**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः। स्रुघ्ने जातः। स्रौघ्नः। उत्से जातः। औत्सः। राष्ट्रे जातः। राष्ट्रियः। अवारपारे जातः

अवारपारीणः। इत्यादि।

प्रावृषष्ठप्। ४।३।२६।

एण्यापवादः। प्रावृषिकः।

प्रायभवः। ४।३।३९।

तत्रेत्येव। स्रुघ्ने प्रायेण बाहुल्येन भवति। स्रौघ्नः।

सम्भूते। ४।३।४१।

स्रुघ्ने। सम्भवति। स्रौघ्नः।

कोशाड्ढञ्। ४।३।४२।

कौशेयं वस्त्रम्।

तत्र भवः। ४।३।५३।

स्रौघ्नः। औत्सः। राष्ट्रियः।

दिगादिभ्यो यत्। ४।३।५४।

दिश्यम्। वर्ग्यम्।

शरीरावयवाच्च। ४।३।५५।

दन्त्यम्। कण्ठ्यम्। अध्यात्मादेष्ठञिष्यते। अध्यात्मेभवमाध्यात्मिकम्।

अनुशतिकादीनाञ्च। ७।३।२०।

एषामुभयपदवृद्धिर्ञ्णिति किति च। आधिदैविकम्। आधिभौतिकम्। ऐहलौकिकम्। आकृतिगणोऽयम्।

जिह्वामूलाङ्गुलेश्छः। ४।३।६२।

जिह्वामूलीयम्। अङ्गुलीयम्।

वर्गान्ताच्च। ४।३।६३।

कवर्गीयम्।

ततआगतः। ४।३।७४।

स्रुघ्नादागतः। स्रौघ्नः।

ठगायस्थानेभ्यः।४।३।७५।

शुल्कशालाया आगत शौल्कशालिकः।

विद्यायोनिसंबन्धेभ्यो वुञ्।४।३।७७

औपाध्यायकः। पैतामहकः।

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः।४।३।८१॥

समादागतं समरूप्यम्। पक्षेगहादित्वाच्छः। समीयम्। देवदत्त रूप्यम्। दैवदत्तम्।

मयट्च।४।३।८२।

सममयम्। देवदत्तमयम्।

प्रभवति।४।३।८३।

हिमवतः प्रभवति हैमवती गङ्गा।

तद्गच्छति पथिदूतयोः।४।३।८५।

स्रुघ्नं गच्छति स्रौघ्नः। पन्था दूतो वा।

अभिनिष्क्रामति द्वारम्।४।३।८६।

स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्।

अधिकृत्यकृते ग्रन्थे।४।३।८७।

शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः।

सोऽस्यनिवासः।४।३।८९।

स्रुघ्नो निवासोऽस्य स्रौघ्नः।

तेन प्रोक्तम्।४।३।१०१।

पाणिनिना प्रोक्तं पाणिनीयम्।

तस्येदम्।४।३।१२०।

उपगोरिदमौपगवम्।

इति शैषिकाः।।

तस्य विकारः।४।३।१३४।

अश्मनो विकारे टिलोपः। अश्मनो विकार आश्मः। भास्मनः। मार्त्तिकः।

अवयवे च प्राण्योषधिवृक्षेभ्यः।४।३।१३५

चाद्विकारे। मयूरस्यावयवो विकारो वा मायूरः। मौर्व्वम्। काण्डं भस्म वा। पैप्पलम्।

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः।४।३।१४३

प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः। अश्ममयम्। आश्मनम्। अभक्ष्येत्यादि किम्। मौद्गः सूपः। कार्प्पासमाच्छादनम्।

नित्यं वृद्धशरादिभ्यः।४।३।१४४

आम्रमयम्।

गोश्च पुरीषे।४।३।१४५।

गोमयम्

गोपयसोर्यत्।४।३।१६०

गव्यम्। पयस्यम्।

इति प्राग्दीव्यतीयाः॥

प्राग्वहतेष्ठक्।४।४।१

तद्वहतीत्यतः प्राक् ठगधिक्रियते।

तेन दीव्यति खनति जयति जितम्।४।४।२

अक्षैर्दीव्यति खनति जयति जितं वा आक्षिकम्।

संस्कृतम्।४।४।३।

दध्ना संस्कृतं दाधिकम्। मारीचिकम्।

तरति।४।४।५।

उडुपेन तरति। औडुपिकः।

चरति।४।४।८।

हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः।

संसृष्टे।४।४।२२।

दध्ना संसृष्टं दाधिकम्।

उञ्छति।४।४।३२।

बदराण्युञ्छति बादरिकः।

रक्षति।४।४।३३।

समाजं रक्षति सामाजिकः।

शब्ददर्दुरं करोति।४।४।३४।

शब्दं करोति शाब्दिकः। दर्दुरं करोति दार्दुरिकः।

धर्म्मञ्चरति।४।४।४१।

धार्म्मिकः।

अधर्म्माच्चेति वक्तव्यम्। आधर्म्मिकः।

शिल्पम्।४।४।५५।

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः।

प्रहरणम्।४।४।५७।

असिः प्रहरणमस्य आसिकः। धानुष्कः।

शीलम्।४।४।६१।

अपूपभक्षणं शीलमस्य आपूपिकः।

निकटे वसति।४।४।७३।

नैकटिको भिक्षुकः।

इति ठगधिकारः॥

प्राग्घिताद्यत्।४।४।७५।

तस्मै हितमित्यतः प्राग्यदधिक्रियते।

तद्वहति रथयुगप्रासङ्गम्।४।४।७६।

रथं वहति रथ्यः। युग्यः। प्रासङ्ग्यः।

धुरो यड्ढकौ।४।४।७७।

धुर्यः । धौरेयः ।

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु । ४।४।९१

नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यः विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ।

तत्र साधुः । ४।४।९८

सामसु साधुः सामन्यः । कर्मण्यः । शरण्यः ।

सभाया यः । ४।४।१०५

सभ्यः ।

इति यतोऽवधिः ॥

प्राक्क्रीताच्छः । ५।१।१ ॥

तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते ।

उगवादिभ्यो यत् । ५।१।२

उवर्णान्ताद्गवादिभ्यश्च यत् । छस्यापवादः । शङ्कव्यं दारु । गव्यम् ।

नाभि नभं च । नभ्योऽक्षः । नभ्यमञ्जनम् ।

तस्मै हितम् । ५।१।५ ॥

वत्सेभ्यो हितो वत्सीयो गोधुक् ।

शरीरावयवाद्यत् । ५।१।६

दन्त्यम् । कण्ठ्यम् । नस्यम् ।

आत्मन्विश्वजनभोगोत्तरपदात्खः । ५।१।९

आत्माध्वानौ खे । ६।४।१६९

एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । विश्वजनीनम् । मातृभोगीणः ।

इति छयतोः पूर्णोऽवधिः

आगवतेष्ठञ्। ५। १। १८।

तेन तुल्यमित्यतः प्राक् ठञधिक्रियते।

तेन क्रीतम्। ५। १। ३७।

सप्तत्या क्रीतं साप्ततिकम्। प्रास्थिकम्।

तस्येश्वरः। ५। १। ४२।

सर्व्वभूमिपृथिवीभ्यामणञौ स्तः। अनुशतिकादीनाञ्च। सर्व्वभूमेरीश्वरः सार्व्वभौमः। पार्थिवः।

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्। ५। १। ५९।

एते रूढशब्दा निपात्यन्ते।

तदर्हति। ५। १। ६३।

श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः।

दण्डादिभ्यो यः। ५। १। ६६।

एभ्यो यः। दण्डमर्हति दण्ड्यः। अर्घ्यः। वध्यः।

तेन निर्वृत्तम्। ५। १। ७९।

अह्ना निर्वृत्तमाह्निकम्।

इति ठञोऽवधिः॥

तेन तुल्यं क्रिया चेद्वतिः। ५। १। ११५।

ब्राह्मणेन तुल्यं ब्राह्मणवदधीते। क्रिया चेत् किम्। गुणतुल्ये माभूत्। पुत्रेण तुल्यस्स्थूलः।

तत्र तस्येव। ५। १। ११६।

मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवन्मैत्रस्य गावः।

तस्य भावस्त्वतलौ। ५। १। ११९।

प्रकृतिजन्यबोधे प्रकारो भावः। गोर्भावो गोत्वम्। त्वान्तं क्लीबम्।

## आच त्वात्। ५। १। १२०।

ब्रह्मणस्त्व इत्यतः प्राक् त्वतलौ वक्ष्यमाणेऽधिक्रियेते। अपवादैः सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता।

## पृथ्वादिभ्य इमनिज्वा। ५। १। १२२।

वावचनमणादिसमावेशार्थम्।

## र ऋतो हलादेर्लघोः। ६। ४। १६१।

इष्ठेमेयस्सु।

## टेः। ६। ४। १५५।

टेर्लोप इष्ठेमेयस्सु। पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्। पृथोर्भावः प्रथिमा। पार्थवम्। म्रदिमा। मार्दवम्।

## वर्णदृढादिभ्यः ष्यञ्च। ५। १। १२३।

चादिमनिच्। शौक्ल्यम्। शुक्लिमा। दार्ढ्यम्। द्रढिमा।

## गुणवचनब्राह्मणादिभ्यः कर्मणि च। ५। १। १२४

चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। मौढ्यम्। ब्राह्मण्यम्। आकृतिगणोऽयम्।

## सख्युर्यः। ५। १। १२६।

सख्यम्।

## कपिज्ञात्योर्ढक्। ५। १। १२७

कापेयम्। ज्ञातेयम्।

## पत्यन्तपुरोहितादिभ्यो यक्। ५। १। १२८

सैनापत्यम्। पौरोहित्यम्।

इति त्वतलोरधिकारः ॥

## धान्यानां भवने क्षेत्रे खञ्। ५। २। १।

मुद्गानां भवनं क्षेत्रं मौद्गीनम्।

व्रीहिशाल्योर्ढक्। ५।२।२

व्रैहेयम्। शालेयम्।

हैयङ्गवीनं सञ्ज्ञायाम्। ५।२।२३

नवनीते निपातितोऽयम्।

तदस्य सञ्जातं तारकादिभ्य इतच्। ५।२।३६

तारकाः सञ्जाता अस्य तारकितं नभः। पण्डितः। आकृतिगणोऽयम्।

प्रमाणे द्वयसज्दघ्नञ्मात्रचः। ५।२।३७

ऊरू प्रमाणमस्य ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्।

यत्तदेतेभ्यः परिमाणे वतुप्। ५।२।३९

यत्परिमाणमस्य यावान्। तावान्। एतावान्।

सङ्ख्याया अवयवे तयप्। ५।२।४२

पञ्चावयवा अस्य पञ्चतयम्।

द्वित्रिभ्यां तयस्यायज्वा। ५।२।४३

द्वयम्। द्वितयम्। त्रयम्। त्रितयम्।

उभादुदात्तो नित्यम्। ५।२।४४

उभयम्।

तस्य पूरणे डट्। ५।२।४८

एकादशानां पूरण एकादशः।

नान्तादसङ्ख्यादेर्मट्। ५।२।४९

मडागमः। पञ्चानां पूरणः पञ्चमः। नान्तात् किम्। विंशः।

ति विंशतेर्डिति। ६।४।१४२

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे। विंशः। असङ्ख्यादेः किम्। एकादशः।

षट्कतिकतिपयचतुरां थुक्।५।२।५१

डटि। षण्णां पूरणः षष्ठः। कतिथः। कतिपयशब्दस्यानेव डट्। कतिपयथः। चतुर्थः।

द्वेस्तीयः।५।२।५४।

डटोऽपवादः। द्वयोः पूरणो द्वितीयः।

त्रेः सम्प्रसारणञ्च।५।२।५५।

तृतीयः।

श्रोत्रियश्छन्दोऽधीते।५।२।८४।

श्रोत्रियः। वेत्त्यनुवृत्तेश्छान्दसः।

पूर्वादिनिः।५।२।८६।

पूर्वं कृतमनेन पूर्वी।

सपूर्वाच्च।५।२।८७।

कृतपूर्वी।

इष्टादिभ्यश्च।५।२।८८।

इष्टमनेन इष्टी। अधीती।

तदस्यास्त्यस्मिन्निति मतुप्।५।२।९४।

गावोऽस्यास्मिन् वा सन्ति गोमान्।

तसौ मत्वर्थे।१।४।१९।

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये। सम्प्रसारणम्। विदुष्मान्।

गुणवचनेभ्यो मतुपो लुगिष्टः। शुक्लो गुणोऽस्यास्तीति शुक्लः पटः। कृष्णः।

प्राणिस्थादातो लजन्यतरस्याम्।५।२।९६।

चूडालः। चूडावान्। प्राणिस्थात् किम्। शिखावान् दीपः। प्राण्यङ्गादेव। मेधा। मेधावान्।

लोमादिपामादिपिच्छादिभ्यः शनेलचः। ५। २। १००।

लोमादिभ्यः शः। लोमशः। लोमवान्। पामादिभ्यो नः। पामनः। अङ्गात् कल्याणे। अङ्गना। लक्ष्म्या अच्च। लक्ष्मणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्।

दन्त उन्नत उरच्। ५। २। १०६।

उन्नता दन्ता अस्य दन्तुरः।

केशाद्वोऽन्यतरस्याम्। ५। २। १०९।

केशवः। केशवान्।

अन्येभ्योऽपि दृश्यते। मणिवः।

अर्णसो लोपश्च। अर्णवः।

अत इनिठनौ। ५। २। ११५।

दण्डी। दण्डिकः।

व्रीह्यादिभ्यश्च। ५। २। ११६।

व्रीही। व्रीहिकः।

अस्मायामेधास्रजो विनिः। ५। २। १२१।

यशस्वी। यशस्वान्। मायावी। मेधावी। स्रग्वी।

वाचो ग्मिनिः। ५। २। १२४।

वाग्मी।

अर्शआदिभ्योऽच्। ५। २। १२७।

अर्शसः। आकृतिगणोऽयम्।

इति मत्वर्थीयाः॥

प्राग्दिशो विभक्तिः। ५। ३। १।

दिक्शब्देभ्य इत्यतः प्रागवक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः॥

अथ स्वार्थिकाः ॥

किंसर्व्वनामबहुभ्योऽद्व्यादिभ्यः। ५।३।२

किमः सर्व्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते।

पञ्चम्यास्तसिल्। ५।३।७।

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा स्यात्।

कु तिहोः। ७।२।१०४।

किमः कुः स्यात्तादौ हादौ च विभक्तौ। कुतः। कस्मात्।

इदम इश्। ५।३।३॥

प्राग्दिशीये। इतः।

एतदोऽन्। ५।३।५।

प्राग्दिशीये। अनेकाल्त्वात् सर्व्वादेशः। अतः। अमुतः। यतः।

ततः। बहुतः। द्व्यादेस्तु। द्वाभ्याम्।

पर्य्यभिभ्यां च। ५।३।९।

तसिल्। परितः। सर्व्वत इत्यर्त्थः। अभितः। उभयत इत्यर्त्थः।

सप्तम्यास्त्रल्। ५।३।१०।

कुत्र। यत्र। बहुत्र।

इदमो हः। ५।३।११।

त्रलोऽपवादः। इह।

किमोऽत्। ५।३।१२

वा स्यात्।

क्वाति। ७।२।१०५।

किमः। क्व। कुत्र।

इतराभ्योऽपि दृश्यन्ते। ५।३।१४।

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते। दृशिग्रह
णाद्भवदादियोग एव। स भवान्। ततो भवान्। तत्र भवान्। ततो

भवन्तम्। तत्रभवन्तम्। एवन्दीर्घायुः। देवानाम्प्रियः। आयुष्मान्

सर्व्वैकान्यकिंयत्तदः काले दा। ५।३।१५।

सप्तम्यन्तेभ्यः कालार्थे दा स्यात्।

सर्व्वस्य सोऽन्यतरस्यान्दि। ५।३।६।

दादौ प्राग्दिशीये सर्व्वस्य सो वा। सर्व्वस्मिन् काले सदा। सर्व्वदा। अन्यदा। कदा। यदा। तदा। काले किम्। सर्व्वत्र देशे।

इदमो र्हिल्। ५।३।१६।

सप्तम्यन्तात्।

एतेतौ रथोः। ५।३।४।

इदम एतइत् एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे। अस्मिन् काले एतर्हि। काले किम्। इह देशे।

अनद्यतने र्हिलन्यतरस्याम्। ५।३।२१।

कर्हि। कदा। यर्हि। यदा। तर्हि। तदा।

एतदः। ५।३।५।

एतद एतइत् एतौ स्तो रेफादौ थादौ च प्राग्दिशीये। एतस्मिन् काले। एतर्हि।

प्रकारवचने थाल्। ५।३।२३।

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल्। तेन प्रकारेण तथा।

इदमस्थमुः। ५।३।२४।

थालोऽपवादः।

एतदोऽपि वाच्यः। अनेन एतेन प्रकारेण वा इत्थम्।

किमश्च। ५।३।२५।

केन प्रकारेण कथम्।

इति प्राग्दिशीयाः॥

अतिशायने तमबिष्ठनौ। ५।३।५५।

अतिशयविशिष्टार्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेना-
ढ्यः आढ्यतमः । लघुतमः । लघिष्ठः ।

तिङश्च ।५।३।५६।

तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

तरप्तमपौ घः ।१।१।२२।

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११।

किम एदन्तात् तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु । उच्चैस्तमस्तरुः ।

द्विवचनविभज्योपपदे तरबीयसुनौ ।५।३।५७।

द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः । लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः । पटीयांसः ।

प्रशस्यस्य श्रः ।५।३।६०।

इष्ठेयसोः परतः ।

प्रकृत्यैकाच् ।६।४।१६३।

इष्ठादावेकाच् प्रकृत्या स्यात् । श्रेष्ठः । श्रेयान् ।

ज्य च ।५।३।६१।

प्रशस्यस्य ज्यादेश इष्ठेयसोः । ज्येष्ठः ।

ज्यादादीयसः ।६।४।१६०।

आदेः परस्य । ज्यायान् ।

बहोर्लोपो भू च बहोः ।६।४।१५८।

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा ।

इष्ठस्य यिट् च ।६।४।१५९।

बहोः परस्य इष्ठस्य लोपः स्याद्यिडागमश्च । भूयिष्ठः ।

विन्मतोर्लुक्। ५। ३। ६५।

स्रग्विन्। अतिशयेन स्रग्वी। स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान्। त्वचिष्ठः। त्वचीयान्।

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः। ५। ३। ६७।

ईषदूनो विद्वान्। विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्।

विभाषा सुपो बहुच् पुरस्तात्तु। ५। ३। ६८।

ईषदूनः पटुः। बहुपटुः। पटुकल्पः। सुपः किम्। पचतिकल्पम्।

प्रागिवात्कः। ५। ३। ७०।

इवे प्रतिकृतौ इत्यतः प्राक् काधिकारः।

अव्ययसर्वनाम्नामकच् प्राक् टेः। ५। ३। ७१

कापवादः।

अज्ञाते। ५। ३। ७३।

कस्यायमश्वः। अश्वकः। उच्चकैः। नीचकैः। सर्वके।

कुत्सिते। ५। ३। ७४॥

कुत्सितोऽश्वः अश्वकः।

किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्। ५। ३। ९२।

अनयोः कतरो वैष्णवः। यतरः। ततरः।

वा बहूनां जातिपरिप्रश्ने डतमच्। ५। ३। ९३।

जातिपरिप्रश्न इति प्रत्याख्यातमाकरे। कतमो भवतां कठः। यतमः। ततमः। वा ग्रहणमकजर्थम्। यकः। सकः।

इति प्रागिवीयाः॥

इवे प्रतिकृतौ। ५। ३। ९६।

कन् स्यात्। अश्व इव प्रतिकृतिः। अश्वकः।

सर्वप्रातिपदिकेभ्यः स्वार्थे कन्। अश्वकः।

## तत्प्रकृतवचने मयट्। ५।४।२१।

प्राचुर्य्येण प्रस्तुतम्प्रकृतन्तस्य वचनम्प्रतिपादनम्। भावेऽधिकरणे वा ल्युट्। आद्ये प्रकृतमन्नमन्नमयम्। अपूपमयम्। द्वितीये तु। अन्नमयो यज्ञः। अपूपमयम्पर्व्व।

## प्रज्ञादिभ्यश्च। ५।४।३८।

अण् स्यात्। प्रज्ञ एव प्राज्ञः। दैवतः।

## बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्। ५।४।४२।

बहूनि ददाति बहुशः। अल्पशः।

आद्यादिभ्यस्तसेरुपसङ्ख्यानम्। आदौ आदितः। मध्यतः। अन्ततः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण स्वरतः। वर्णतः।

## कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः। ५।४।५०।

अभूततद्भाव इति वक्तव्यम्। विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात् स्वार्थे च्विर्वा स्यात् करोत्यादिभिर्योगे।

## अस्य च्वौ। ७।४।३२।

अवर्णस्य ईत् स्यात् च्वौ। अकृष्णः कृष्णः सम्पद्यते तं करोति कृष्णीकरोति। ब्रह्मीभवति। गङ्गीस्यात्।

अव्ययस्य च्वावीत्वन्नेति वाच्यम्। दोषाभूतमहः। दिवाभूता रात्रिः।

## विभाषा साति कार्त्स्न्ये। ५।४।५२।

च्विविषये साति र्वा स्यात् साकल्ये।

## सात्पदाद्योः। ८।३।१११।

सस्य षत्वन्न। दधि सिञ्चति। कृत्स्नं शस्त्रमग्निः सम्पद्यतेऽग्निसाद्भवति।

## च्वौ च। ७।४।२६।

दीर्घः स्यात्। शुची भवति।

अव्यक्तानुकरणाद्द्व्यजवरार्द्धादनितौ डाच्। ५।४।५७

द्व्यजवरं न्यूनं न तु ततो न्यूनम्। अनेकाजिति यावत्। तादृशमर्द्धं यस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे।

डाचि बहुलं द्वे भवत इति डाचि विवक्षिते द्वित्वम्।

नित्यमाम्रेडिते डाचीति वक्तव्यम्। डाच्परं यदाम्रेडितं तस्मिन् परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति तकारपकारयोः पकारः। पटपटा करोति। अव्यक्तानुकरणात् किम्। दृषत् करोति। द्व्यजवरार्द्धात् किम्। श्रत् करोति। अवरेति किम्। खरटखरटा करोति। अनितौ किम्। पटिति करोति।

॥ इति तद्धिताः ॥

अथ स्त्रीप्रत्ययाः।

अजाद्यतष्टाप्। ४।१।४

अजादीनामकारान्तस्य च वाच्यं यत् स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजा। एडका। अश्वा। चटका। मूषिका। बाला। वत्सा। होडा। मन्दा। विलाता। मेधा। इत्यादि। गङ्गा। सर्वा।

उगितश्च। ४।१।६।

उगिदन्तात् प्रातिपदिकात् ङीप्। भवती। पचन्ती।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः। ४।१।१५।

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं ततः स्त्रियां ङीप्। कुरुचरी। नदट्। नदी। देवट्। देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। प्रास्थिकी। लावणिकी। यादृशी। इत्वरी।

नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्। स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी। तलुनी।

१०८

### यञश्च। ४।१।१६

यञन्तान् ङीप्। अकारलोपे कृते।

### हलस्तद्धितस्य। ६।४।१५०

हलः परस्य तद्धितयकारस्य लोप ईति परे। गार्गी।

### प्राचां ष्फ तद्धितः। ४।१।१७

यञन्तात् ष्फो वा स्यात् स च तद्धितः।

### षिद्गौरादिभ्यश्च। ४।१।४१

ङीष् स्यात्। गार्ग्यायणी। नर्त्तकी। गौरी। अनडुही। अनड्वाही।

आकृतिगणोऽयम्।

### वयसि प्रथमे। ४।१।२०

प्रथमवयोवाचिनोऽदन्तान् ङीप्। कुमारी।

### द्विगोः। ४।१।२१

अदन्ताद् द्विगोः ङीप्। त्रिलोकी। अजादित्वात् त्रिफला। त्र्यनीका।

### वर्णादनुदात्तात्तोपधात्तो नः। ४।१।३९

वर्णवाची यो ऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनाद्वा ङीप् तकारस्य नः। एता। एनी। रोहिता। रोहिणी।

### वोतो गुणवचनात्। ४।१।४४

उदन्ताद्गुणवाचिनो वा ङीष्। मृद्वी। मृदुः।

### बह्वादिभ्यश्च। ४।१।४५

वा ङीष्। बह्वी। बहुः।

कृदिकारादक्तिनः। रात्री। रात्रिः।

सर्वतोऽक्तिन्नर्थादित्येके। शकटी। शकटिः।

### पुंयोगादाख्यायाम्। ४।१।४८

या पुमाख्या पुंयोगात् स्त्रियां वर्त्तते ततो ङीष्। गोपस्य स्त्री गोपी।

पालकान्तान्न। गोपालिका। अश्वपालिका।

**प्रत्ययस्थात् कात् पूर्व्वस्यात इदाप्यसुपः।७।३।४४।**

प्रत्ययस्थात् कात् पूर्व्वस्याकारस्येकारः स्यादापि स आप् सुपः परो न चेत्। सर्व्विका। कारिका। अतः किम्। नौका। प्रत्ययस्थात् किम्। शक्नोतीति शका। असुपः किम्। बहुपरिव्राजका नगरी।

सूर्य्याद्देवतायां चाप्। सूर्य्यस्य स्त्री देवता सूर्य्या। देवतायां किम्।

सूर्य्यागस्त्ययोश्छे च ङ्यां च यलोपः। सूरी कुन्ती।

**इन्द्रवरुणभवशर्व्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक्।४।१।४९**

ङीष् च। इन्द्रस्य स्त्री इन्द्राणी। वरुणानी। भवानी। शर्व्वाणी। रुद्राणी। मृडानी।

हिमारण्ययोर्महत्त्वे। महद्धिमं हिमानी। महदरण्यमरण्यानी।

यवाद्दोषे। दुष्टो यवो यवानी।

यवनाल्लिप्याम्। यवनानां लिपिर्यवनानी।

मातुलोपाध्याययोरानुग्वा। मातुलानी। मातुली। उपाध्यायानी। उपाध्यायी।

आचार्य्यादणत्वञ्च। आचार्य्यानी।

अर्य्यक्षत्रियाभ्यां वा स्वार्थे। अर्य्याणी। अर्य्या। क्षत्रियाणी। क्षत्रिया।

**क्रीतात् करणपूर्व्वात्।४।१।५०**

ङीष्। वस्त्रक्रीती। क्वचिन्न। धनक्रीता।

**स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधात्।४।१।५४।**

असंयोगोपधमुपसर्ज्जनं यत् स्वाङ्गं तदन्तान्ङीष् वा। केशानतिक्रान्ता अतिकेशी। अतिकेशा। चन्द्रमुखी। चन्द्रमुखा। असंयोगोपधात् किम्। सुगुल्फा। उपसर्ज्जनात् किम्। सुशिखा।

**नक्रोडादिबह्वचः।४।१।५६।**

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। आकृतिगणोऽयम्। सुजघना।

## नखमुखात्संज्ञायाम्। ४।१।५८।

न ङीष्।

## पूर्वपदात्संज्ञायामगः। ८।४।३।

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने। शूर्पणखा। गौरमुखा। संज्ञायां किम्। ताम्रमुखी कन्या।

## जातेरस्त्रीविषयादयोपधात्। ४।१।६३।

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततो ङीष्। तटी। वृषली। कठी। बह्वृची। जातेः किम्। मुण्डा। अस्त्रीविषयात् किम्। बलाका। अयोपधात् किम्। क्षत्रिया।

योपधप्रतिषेधे गवयहयमुकयमत्स्यमनुष्याणामप्रतिषेधः। गवयी। हयी। मुकयी। हलस्तद्धितस्येति यलोपः। मनुषी। मत्स्यस्य ङ्यां यलोपः। मत्सी।

## इतो मनुष्यजातेः। ४।१।६५।

ङीष्। दाक्षी।

## ऊङुतः। ४।१।६६।

उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ्। कुरूः। अयोपधात् किम्। अध्वर्युर्ब्राह्मणी।

पङ्गोश्च। पङ्गूः।

श्वशुरस्योकाराकारलोपश्च। श्वश्रूः।

## ऊरूत्तरपदादौपम्ये। ४।१।६९।

उपमानवाचिपूर्वपदमूरूत्तरपदं यत् प्रातिपदिकं तस्मादूङ्। करभोरूः।

संहितशफलक्षणवामादेश्च ।४।१।७०।

अनौपम्यार्थं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ।

शार्ङ्गरवाद्यञो ङीन् ।४।१।७३।

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् । शार्ङ्गरवी । बैदी । ब्राह्मणी ।

नृनरयोर्वृद्धिश्च । नारी ।

यूनस्तिः ।४।१।७७।

युवन्शब्दात् स्त्रियान्तिः स्यात् । युवतिः ।

इति स्त्रीप्रत्ययाः ॥

शास्त्रान्तरे प्रविष्टानां बालानामुपकारिका ।

कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥

॥ इति श्री वरदराजकृता लघुसिद्धान्तकौमुदी ॥

पराग्निनन्दचन्द्राब्दे पौषकृष्णे कुजे कथे ॥

लिखिता वैद्यनाथेन लघुसिद्धान्तकौमुदी ॥ १

तथा महेशचन्द्रेण सुकुलेन सुशोधिता ॥ ॥

प्रीत्यै भूयात्सतामेतत्परिश्रमविचारिणाम् २

| नामकिताब | नामकिताब | नामकिताब |
|---|---|---|
| रामायण दोहावली | किताब पटवारी ४ भाग | पद्मावती खण्ड आल- |
| सुन्दरी चरित्र | रसराज | खण्ड |
| रामायण नानार्थ नौस | कृष्णप्रिया | लावनी बशेर बनारसी |
| ङ्गुहावली | भगवद्गीता विष्णुसहस्र | युगल विलास |
| दूसरी पुस्तक रामायण- | नाम सहित | भाषा महाभारत विजय |
| माला | ज्ञान स्वरोदय | मुक्तावली |
| तीसरी रामायण गीताष्टक | भरतरी गीत | जनक पच्चीसी |
| चौथी ज्ञान दोहावली | देवी भागवत नागरी | शृंगार प्रकाश |
| पांचवीं रस सारिणी | कल्पसूत्र | दोहावली रत्नावली |
| छठी तिथि बोध | बिहारी सतसई सटीक | स्त्री दर्पण |
| सातवीं पुस्तक मातृदत्त | विश्राम सागर | समर बिहार विन्द्रावन |
| कृत | रामलगन | रमलसार |
| सत्य नारायण की कथा स० | मनुस्मृति उर्दू टीका स० | कथा चित्रगुप्त |
| शनिश्चर की कथा | वैष्णवी सन्ध्या | कायस्थ दर्पण |
| राम कलेवा | याज्ञवल्क्य भा० टी० स० | कृष्ण बाल लीला |
| तुलसी शब्दार्थ प्रकाश | प्रबोध चन्द्रोदय नाटक | गीत गोविन्द सटीक |
| कवि कुल कल्पतरु भाषा | आनन्दामृत वर्षिणी | रामाभिषेक नाटक |
| प्रेमरत्न | निर्णयसिन्धु | इन्द्र सभा नागरी |
| बनयात्रा | ज्ञानमाला | सिंहासन बत्तीसी |
| भजनावली | देवता भरण | शुक बहत्तरी |
| बारहमासा फ़क़ीर अल्ला | ज्ञान चालीसी | अपूर्व कथा अर्थात |
| बख़्श | शङ्कर दिग्विजय भाषा | गुल बकावली |
| बारहमासा बलदेव प्रसा- | योग वाशिष्ठ देवनागरी | गुल सनोबर नागरी |
| द कृत | मार्कण्डेय पुराण | चित्र चन्द्रिका |
| कृष्ण सागर | बैताल पच्चीसी | छन्दोर्णव पिङ्गल |
| हारीत स्मृति नागरी | दानलीला नागलीला | हिदायतनामा मालगुज़ारी |
| भगवद्गीता सटीक नागरी | सभा विलास | हिदायतनामा बन्दोबस्त |
| रामायण राम विलास | विक्रम विलास | विद्यार्थी की प्रथम पुस्तक |
| यमुना लहरी | इन्द्रजाल नागरी | बाला बोध |
| षट्पञ्चाशिका | कायस्थ कुल भास्कर | साङ्ख्य तत्व कौमुदी |
| कल्पसूत्र भाषा | क़िस्सह गोपीचन्द भरतरी | क़ानून |
| विनय पत्रिका सटीक | बहार विन्द्रावन | ताजीरात हिन्द अर्थात |

| नामकिताब | नामकिताब | नामकिताब |
|---|---|---|
| ऐक्ट ४५ सन् १८५९ ई० | अक्षरावली | अरण्यकाण्ड |
| ऐक्ट २५ सन् १८६१ ई० | अक्षरदीपिका | किष्किन्धा काण्ड |
| ज़ाबिते फ़ौजदारी | विद्याङ्कुर | सुन्दर काण्ड |
| मजमूआ ऐक्ट लगान | बाल बोध | लङ्का काण्ड |
| अवध जिसके साथ नो- | भाषा चन्द्रोदय | उत्तर काण्ड |
| टे लिखे हुये ऐक्ट संयुक्त हैं | इंगलिस्तान का इतिहास | अक्षरारम्भ |
| ऐक्ट २० सन् १८७७ ई० | गणित लता १ भाग | भाषा तत्त्व दीपिका |
| अर्दीद | तथा २ | बाल भूषण |
| ऐक्ट १९ सन् १८६३ ई० | तथा ३ | हिदायत नामा मुदर्रिसान् |
| ऐक्ट १४ सन् १८६५ ई० | गणित प्रकाश १ भाग | हल्क़ह बन्दी |
| ऐक्ट १६ सन् १८६१ ई० | तथा २ | शिक्षावली |
| ऐक्ट नं० २६ सन् १८६६ ई० | तथा ३ | भोज प्रबन्ध सार |
| ऐक्ट ३० सन् १८६६ ई० | तथा ४ | राजनीति |
| ऐक्ट २४ सन् १८७० ई० | शिशुबोध | स्त्रियों की हितोपत्रिका |
| ऐक्ट २० सन् १८५९ ई० | पशुचिकित्सा | अवध भूगोल |
| ऐक्ट ५ सन् १८६१ ई० | क्षेत्रचन्द्रिका १ भाग | कवित्त रत्नाकर |
| ऐक्ट १० सन् १८६२ ई० | तथा २ | भूगोल दर्पण |
| ऐक्ट १८ सन् १८६९ ई० | रेखागणित १ भाग | बीजगणित १ भाग |
| ऐक्ट २६ सन् १८६७ ई० | तथा २ | तथा |
| ऐक्ट नं० १९ सन् १८६० ई० | सूरजपुर की कहानी | कैथी वर्ण माला |
| क़वायद रेलवे और उसके | विद्याचक्र | महाभारत भाषा छन्द |
| साथ क़ानून भी हैं॥ | भूगोल तत्त्व | प्रबन्ध में जो श्रीमन्महा- |
| ऐक्ट १९ सन् १८७१ ई० | पदार्थ विद्यासार | राजाधिराज उदित नारा- |
| अस्थात क़ानून लगान | वर्ण प्रकाशिका | यण सिंह जी काशी नरेश ने |
| मुमालिक मग़रबी व शि- | मङ्गलकोष | गोकुलनाथादि कवीश्व- |
| माली | पत्र दीपिका | रों से रचना कराय कल- |
| ऐक्ट १२ सन् १८७४ ई० | भारत खण्डिका | कत्ते में छपवाया था वही |
| ऐक्ट १० सन् १८७६ ई० | [illegible] | श्रीयुत माधवसिंह गढ़ अ- |

